# अवधूतोपनिषत्

गौणमुख्यावधूतालिहृदयाम्बुजवर्ति यत् ।
तत्त्रैपदं ब्रह्मतत्त्वं स्वमात्रमवशिष्यते ॥ १ ॥

ॐ सहनाववत्विति शान्तिः ॥

हरिः ॐ अथ ह सांकृतिर्भगवन्तमवधूतं दत्तात्रेयं परिसमेत्य पप्रच्छ भगवन्कोऽवधूतस्तस्य का स्थितिः किं लक्ष्म किं संसरणमिति । तं होवाच भगवो दत्तात्रेयः परमकारुणिकः ॥ अक्षरत्वाद्वरेण्यत्वाद्धूतसंसारबन्धनात् । तत्त्वमस्यादिलक्ष्यत्वादवधूत इतीर्यते ॥ १ ॥ यो विलङ्घ्याश्रमान्वर्णानात्मन्येव स्थितः सदा । अतिवर्णाश्रमी योगी अवधूतः स कथ्यते ॥ २ ॥ तस्य प्रियं शिरः कृत्वा मोदो दक्षिणपक्षकः । प्रमोद उत्तरः पक्ष आनन्दो गोष्पदायते ॥ ३ ॥ गोपालसदृशं शीर्षे नापि मध्ये न चाप्यधः । ब्रह्मपुच्छं प्रतिष्ठेति पुच्छाकारेण कारयेत् ॥ ४ ॥ एवं चतुष्पथं कृत्वा ते यान्ति परमां गतिम् । न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ॥ ५ ॥ स्वैरं स्वैरविहरणं तत्संस्मरणम् । साम्बरा वा दिगम्बरा वा । न तेषां धर्माधर्मौ न मेध्यामेध्यौ । सदा सांग्रहण्येष्ट्याऽश्वमेधमन्तर्यागं यजते । स महामखो महायोगः । कृत्स्नमेतच्चित्रं कर्म । स्वैरं न विगायेत्तन्महाव्रतम् । न स मूढवल्लिप्यते । यथा रविः सर्वरसान्प्रभुङ्क्ते हुताशनश्चापि हि सर्वभक्षः । तथैव योगी विषयान्प्रभुङ्क्ते न लिप्यते पुण्यपापैश्च शुद्धः ॥ ६ ॥ आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् । तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी ॥ ७ ॥ न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ ८ ॥ ऐहिकामुष्मिकव्रातसिद्ध्यै मुक्तेश्च सिद्धये । बहुकृत्यं पुरा स्यान्मे तत्सर्वमधुना कृतम् ॥ ९ ॥ तदेव कृतकृत्यत्वं प्रतियोगिपुरःसरम् । अनुसंदधदेवायमेवं तृप्यति नित्यशः ॥ १० ॥ दुःखिनोऽज्ञाः संसरन्तु कामं पुत्राद्यपेक्षया । परमानन्द पूर्णोऽहं संसरामि किमिच्छया ॥ ११ ॥ अनुतिष्ठन्तु कर्माणि परलोकयियासवः । सर्वलोकात्मकः कस्मादनुतिष्ठामि किं कथम् ॥ १२ ॥ व्याचक्षतां ते शास्त्राणि वेदानध्यापयन्तु वा । येऽत्राधिकारिणो मे तु नाधिकारोऽक्रियत्वतः ॥ १३ ॥ निद्राभिक्षे स्नानशौचे नेच्छामि न करोमि च । द्रष्टारश्चेत्कल्पयन्तु किं मे स्यादन्यकल्पनात् ॥ १५ ॥ गुञ्जापुञ्जादि दह्येत नान्यारोपित वह्निना । नान्यारोपितसंहारधर्मा नैवमहं भजे ॥ १५ ॥ शृण्वन्त्वज्ञाततत्त्वास्ते

जानन्कस्माच्छृणोम्यहम् । मन्यन्तां संशयापन्ना न मन्येऽहमसंशयः ॥ १६ ॥ विपर्यस्तो निदिध्यासे किं ध्यानमविपर्यये । देहात्मत्वविपर्यासं न कदाचिद् भजाम्यहम् ॥ १७ ॥ अहं मनुष्य इत्यादिव्यवहारो विनाप्यमुम् । विपर्यासं चिराभ्यस्तवासनातोऽवकल्पते ॥ १८ ॥ आरब्धकर्मणि क्षीणे व्यवहारो निवर्तते । कर्मक्षये त्वसौ नैव शाम्येद्ध्यानसहस्रतः ॥१९॥ विरलत्वं व्यवहृतेरिष्टं चेद्ध्यान-मस्तु ते । बाधिकर्मव्यवहृतिं पश्यन्ध्यायाम्यहं कुतः ॥ २० ॥ विक्षेपो नास्ति यस्मान्मे न समाधिस्ततो मम । विक्षेपो वा समाधिर्वा मनसः स्याद्विकारिणः नित्यानुभवरूपस्य को मेऽत्रानुभवः पृथक् ॥ २१ ॥ कृतं कृत्यं प्रापणीयं प्राप्त-मित्येव नित्यशः । व्यवहारो लौकिको वा शास्त्रीयो वान्यथापि वा । ममाकर्तुर-लेपस्य यथारब्धं प्रवर्तताम् ॥ २२ ॥ अथवा कृतकृत्येऽपि लोकानुग्रहकाम्यया । शास्त्रीयेणैव मार्गेण वर्तेऽहं मम का क्षतिः ॥ २३ ॥ देवार्चनस्नानशौचभिक्षादौ वर्ततां वपुः । तारं जपतु वाक्तद्वत्पठत्वाम्नायमस्तकम् ॥ २४ ॥ विष्णुं ध्यायतु धीर्यद्वा ब्रह्मानन्दे विलीयताम् । साक्ष्यहं किंचिदप्यत्र न कुर्वे नापि कारये ॥२५॥ कृतकृत्यतया तृप्तः प्राप्तप्राप्यतया पुनः । तृप्यन्नेवं स्वमनसा मन्यतेसौ निरन्तरम् ॥ २६ ॥ धन्योऽहं धन्योऽहं नित्यं स्वात्मानमञ्जसा वेद्मि । धन्योऽहं धन्योऽहं ब्रह्मानन्दो विभाति मे स्पष्टम् ॥ २७ ॥ धन्योऽहं धन्योऽहं दुःखं सांसारिकं न वीक्षेऽद्य । धन्योऽहं धन्योऽहं स्वस्याज्ञानं पलायितं क्वापि ॥ २८ ॥ धन्योऽहं धन्योऽहं कर्तव्यं मे न विद्यते किंचित् । धन्योऽहं धन्योऽहं प्राप्तव्यं सर्वमत्र संपन्नम् ॥२९॥ धन्योऽहं धन्योऽहं तृप्तेर्मे कोपमा भवेल्लोके । धन्योऽहं धन्योऽहं धन्यो धन्यः पुनः पुनर्धन्यः ॥ ३० ॥ अहो पुण्यमहो पुण्यं फलितं फलितं दृढम् । अस्य पुण्यस्य संपत्तेरहो वयमहो वयम् ॥३१॥ अहो ज्ञानमहो ज्ञानमहो सुखमहो सुखम् । अहो शास्त्रमहो शास्त्रमहो गुरुरहो गुरुः ॥ ३२ ॥ इति य इदमधीते सोऽपि कृतकृत्यो भवति । सुरापानात्पूतो भवति । स्वर्णस्तेयात्पूतो भवति । ब्रह्महत्यात्पूतो भवति । कृत्याकृत्यात्पूतो भवति । एवं विदित्वा स्वेच्छाचारपरो भूयादोंसत्यमित्युपनिषत् ॥ ॐ सहनाववत्विति शान्तिः ॥ हरिः ॐ तत्सत् ॥

॥ इत्यवधूतोपनिषत्समाप्ता ॥

---

# दत्तात्रेयोपनिषत् ॥

दत्तात्रेयोब्रह्मविद्यासंवेद्यानन्दविग्रहम् ।
त्रिपान्नारायणाकारं दत्तात्रेयमुपास्महे ॥ १ ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

हरिः ॐ ॥ सत्यक्षेत्रे ब्रह्मा नारायणं महासाम्राज्यं किं तारकं तन्नो ब्रूहि भगवन्नित्युक्तः सत्यानन्दचिदात्मकं सात्त्विकं मामकं धामोपास्वेत्याह । सदा दत्तोऽहमस्मीति प्रत्येतत्संवदन्ति येन ते संसारिणो भवन्ति नारायणेनैवं विवक्षितो ब्रह्मा विश्वरूपधरं विष्णुं नारायणं दत्तात्रेयं ध्यात्वा सद्वदति । दमिति हंसः । दामिति दीर्घं तद्बीजं नाम बीजस्थम् । दामित्येकाक्षरं भवति । तदेतत्तारकं भवति । तदेवोपासितव्यं विज्ञेयं गर्भादितारणम् ॥ गायत्रीछन्दः । सदाशिव ऋषिः । दत्तात्रेयो देवता । वटबीजस्थमिव दत्तबीजस्थं सर्वं जगत् । एतदेवैकाक्षरं व्याख्यातम् । व्याख्यास्ये षडक्षरम् । ओमिति द्वितीयम् । ह्रीमिति तृतीयम् । क्लीमिति चतुर्थम् । ग्लौमिति पञ्चमम् । द्रामिति षट्कम् । षडक्षरोऽयं भवति । योगानुभवो भवति । गायत्री छंदः । सदाशिव ऋषिः । दत्तात्रेयो देवता । द्रमित्युक्त्वा द्रामित्युक्त्वा वा दत्तात्रेयाय नम इत्यष्टाक्षरः । दत्तात्रेयायेति सत्यानन्दचिदात्मकम् । नम इति पूर्णानन्दकविग्रहम् । गायत्री छन्दः । सदाशिव ऋषिः । दत्तात्रेयो देवता । दत्तात्रेयो देवता । दत्तात्रेयायेति कीलकम् । तदेव बीजम् । नमः शक्तिर्भवति । ओमिति प्रथमम् । आमिति द्वितीयम् । ह्रीमिति तृतीयम् । क्रोमिति चतुर्थम् । एहीति तदेव वदेत् । दत्तात्रेयेति स्वाहेति मन्त्रराजोऽयं द्वादशाक्षरः । जगती छन्दः । सदाशिव ऋषिः । दत्तात्रेयो देवता । ओमिति बीजम् । स्वाहेति शक्तिः । संबुद्धिरिति कीलकम् । द्रमिति हृदये । ह्रीं क्लीमिति शीर्षे । एहीति शिखायाम् । दत्तेति कवचे । आत्रेयेति चक्षुषि । स्वाहेत्यस्त्रे । तन्मयो भवति । य एवं वेद । षोडशाक्षरं व्याख्यास्ये । प्राणं देयम् । मानं देयम् । चक्षुर्देयम् । श्रोत्रं देयम् । षड्दशशिरश्छिनत्ति षोडशाक्षरमन्त्रे न देयो भवति । अतिसेवापरभक्तगुणवच्छिष्याय वदेत् । ओमिति प्रथमं भवति । ऐमिति द्वितीयम् । क्रोमिति तृतीयम् । क्लीमिति चतुर्थम् । क्लूमिति पञ्चमम् । ह्रामिति षष्ठम् । ह्रीमिति सप्तमम् । ह्रूमित्यष्टमम् । सौरिति नवमम् । दत्तात्रेयायेति चतुर्दशम् । स्वाहेति षोडशम् । गायत्री छन्दः । सदाशिव ऋषिः । दत्तात्रेयो देवता । ॐ बीजम् । स्वाहा शक्तिः । चतुर्थ्यन्तं कीलकम् ।

ओमिति हृदये। क्लां क्लीं क्लूमिति शिखायाम्। सौरिति कवचे। चतुर्थ्यन्तं चक्षुषि। स्वाहेत्यस्त्रे। यो नित्यमधीयानः सच्चिदानन्द सुखी मोक्षी भवति। सौरित्यन्ते श्रीवैष्णव इत्युच्यते। तज्जापी विष्णुरूपी भवति। अनुष्टुप् छन्दो व्याख्यास्ये। सर्वत्र संबुद्धिरिमानीत्युच्यन्ते। दत्तात्रेय हरे कृष्ण उन्मत्तानन्द-दायक। दिगम्बर मुने बालपिशाच ज्ञानसागर ॥ १ ॥ इत्युपनिषत्। अनुष्टुप् छन्दः। सदाशिव ऋषिः। दत्तात्रेयो देवता दत्तात्रेयेति हृदये। हरे कृष्णेति शीर्षे। उन्मत्तानन्देति शिखायाम्। दायकमुन इति कवचे। दिगम्बरेति चक्षुषि। पिशाचज्ञानसागरेत्यस्त्रे। अनुष्टुभोऽयं मयाधीतः। अब्रह्मजन्मदोषाश्च प्रणश्यन्ति। सर्वोपकारी मोक्षी भवति। य एवं वेदेत्युपनिषत् ॥ १ ॥ इति प्रथमः खण्डः ॥ १ ॥

ओमिति व्याहरेत्। ॐ नमो भगवते दत्तात्रेयाय स्मरणमात्रसंतुष्टाय महाभयनिवारणाय महाज्ञानप्रदाय चिदानन्दात्मने बालोन्मत्तपिशाचवेषायेति महायोगिनेऽवधूतायेति अनसूयानन्दवर्धनायात्रिपुत्रायेति सर्वकामफलप्रदाय ओमिति व्याहरेत्। भवबन्धमोचनायेति ह्रीमिति व्याहरेत्। सकलविभूतिदायेति क्रोमिति व्याहरेत्। साध्याकर्षणायेति सौरिति व्याहरेत्। सर्वमनःक्षोभणायेति श्रीमिति व्याहरेत्। महोमिति व्याहरेत्। चिरंजीविने वषडिति व्याहरेत्। वशी-कुरु वशीकुरु वौषडिति व्याहरेत्। आकर्षयाकर्षय हुमिति व्याहरेत्। विद्वेषय विद्वेषय फडिति व्याहरेत्। उच्चाटयोच्चाटय ठठेति व्याहरेत्। स्तम्भय स्तम्भय खखंति व्याहरेत्। मारय मारय नमः संपन्नाय नमः संपन्नाय स्वाहा पोषय पोषय परमन्त्रपरयन्त्रपरतन्त्रांच्छिन्धिच्छिन्धि ग्रहान्निवारय निवारय व्याधीन्निवारय निवारय दुःखं हरय हरय दारिद्र्यं विद्रावय विद्रावय देहं पोषय पोषय चित्तं तोषयतोषयेति सर्वमन्त्रसर्वयन्त्रसर्वतन्त्र सर्वपल्लवस्वरूपायेति ॐ नमः शिवायेत्यु-पनिषत् ॥ २ ॥ इति द्वितीयः खण्डः ॥ २ ॥

य एवं वेद। अनुष्टुप् छंदः। सदाशिव ऋषिः। दत्तात्रेयो देवता। ओमिति बीजम्। स्वाहेति शक्तिः। द्रामिती कीलकम्। अष्टमूर्त्यष्टमन्त्रा भवन्ति। यो नित्यमधीते वाय्वग्निसोमादित्यब्रह्मविष्णुरुद्रैः पूतो भवति। गायत्र्याः शतसहस्रं जपं भवति। महारुद्रशतसहस्रजापी भवति। प्रणवायुतकोटिजप्तो भवति। शतपूर्वाञ्छतापरान्पुनाति। स पङ्क्तिपावनो भवति। ब्रह्महत्यादिपातकैर्मुक्तो भवति। गोहत्यादिपातकैर्मुक्तो भवति। तुलापुरुषादिदानैः प्रपादानतः पूतो भवति। अशेषपापान्मुक्तो भवति। भक्ष्याभक्ष्यपापैर्मुक्तो भवति। सर्व-मन्त्रयोगपारीणो भवति। स एव ब्राह्मणो भवति। तस्माच्छिष्यं भक्तं प्रतिगृह्णी-यात्। सोऽनन्तफलमश्नुते। स जीवन्मुक्तो भवतीत्याह भगवान्नारायणो ब्रह्माण-मित्युपनिषत् ॥ ॐ भद्रं कर्णेभिरिति शान्तिः ॥ हरि ॐ तत्सत् ॥

॥ इति दत्तात्रेयोपनिषत्समाप्ता ॥

# अथ अवधूतगीता प्रारंभः ।

ईश्वरानुग्रहादेव पुंसामद्वैतवासना ।। महद्भयपरित्राणाद्विप्राणामुपजायते ।। १ ।। येनेदं पूरितं सर्वमात्मनैवात्मनात्मनि ।। निराकारं कथं वन्दे ह्यभिन्नं शिवमव्ययम् ।। २ ।। पञ्चभूतात्मकं विश्वं मरीचिजलसन्निभम् । कस्याप्यहो नमस्कुर्यामहमेको निरञ्जनः ।। ३ ।। आत्मैव केवलं सर्वं भेदाभेदो न विद्यते । अस्ति नास्ति कथं ब्रूयां विस्मयः प्रतिभाति मे ।। ४ ।। वेदान्तसारसर्वस्वं ज्ञानं विज्ञानमेव च । अहमात्मा निराकारः सर्वव्यापी स्वभावतः ।। ५ ।। यो वै सर्वात्मको देवो निष्कलो गगनोपमः । स्वभावनिर्मलः शुद्धः स एवाहं न संशयः ।। ६ ।। अहमेवाव्ययोऽनन्तः शुद्धविज्ञानविग्रहः । सुखं दुःखं न जानामि कथं कस्यापि वर्तते ।। ७ ।। न मानसं कर्म शुभाशुभं मे न कायिकं कर्म शुभाशुभं मे । न वाचिकं कर्म शुभाशुभं मे ज्ञानामृतं शुद्धमतीन्द्रियोऽहम् ।। ८ ।। मनो वै गगनाकारं मनो वै सर्वतोमुखम् । मनोऽतीतं मनः सर्वं न मनः परमार्थतः ।। ९ ।। अहमेकमिदं सर्वं व्योमातीतं निरन्तरम् ।। पश्यामि कथमात्मानं प्रत्यक्षं वा तिरोहितम् ।। १० ।। त्वमेवमेकं हि कथं न बुध्यसे समं हि सर्वेषु विमृष्टमव्ययम् । सदोदितोऽसि त्वमखण्डितः प्रभो दिवा च नक्तं च कथं हि मन्यसे ।। ११ ।। आत्मानं सततं विद्धि सर्वत्रैकं निरन्तरम् । अहं ध्याता परं ध्येयमखण्डं खण्डयते कथम् ।। १२ ।। न जातो न मृतोऽसि त्वं न ते देहः कदाचन । सर्वं ब्रह्मेति विख्यातं ब्रवीति बहुधा श्रुतिः ।। १३ ।। स बाह्याभ्यन्तरोऽसि त्वं शिवः सर्वत्र सर्वदा । इतस्ततः कथं भ्रान्तः प्रधावसि पिशाचवत् ।। १४ ।। संयोगश्च वियोगश्च वर्तते न च ते न मे । न त्वं नाहं जगन्नेदं सर्वमात्मैव केवलम् ।। १५ ।। शब्दादिपञ्चकस्यास्य नैवासि त्वं न ते पुनः । त्वमेव परमं तत्त्वमतः किं परितप्यसे ।। १६ ।। जन्ममृत्युर्न ते चित्तं बन्धमोक्षौ शुभाशुभौ । कथं रोदिषि रे वत्स नामरूपं न ते न मे ।। १७ ।। अहो चित्त (!) कथं भ्रान्तः प्रधावसि पिशाचवत् । अभिन्नं पश्य चात्मानं रागत्यागात्सुखी भव ।।१८।। त्वमेव तत्त्वं हि विकारवर्जितं निष्कम्पमेकं हि विमोक्षविग्रहम् । न ते च रागो ह्यथवा विरागः कथं हि संतप्यसि कामकामतः ।। १९ ।। वदन्ति श्रुतयः सर्वा निर्गुणं शुद्धमव्ययम् । अशरीरं समं तत्त्वं तन्मां विद्धि न संशयः ।। २० ।। साकारमनृतं विद्धि निराकारं निरन्तरम् । एतत्तत्त्वोपदेशे न पुनर्भवसंभवः ।। २१ ।। एकमेव समं तत्त्वं वदन्ति हि विपश्चितः। रागत्यागात्पुनश्चित्तमेकानेकं न विद्यते ।। २२ ।। अनात्मरूपे च कथं समाधिरात्मस्वरूपं च कथं समाधिः । अस्तीति

नास्तीति कथं समाधिर्मोक्षस्वरूपं यदि सर्वमेकम् ॥ २३ ॥ विशुद्धोऽसि समं तत्त्वं विदेहस्त्वमजोऽव्ययः । जानामीह न जानामीह चात्मानं मन्यसे कथम् ॥ २४ ॥ तत्त्वमस्यादिवाक्येन स्वात्मा हि प्रतिपादितः । नेति नेति श्रुतिर्ब्रूयादनृतं पाञ्चभौतिकम् ॥ २५ ॥ आत्मन्येवात्मना सर्वं त्वया पूर्णं निरन्तरम् । ध्याता ध्यानं न ते चित्तं निर्लज्जं ध्यायते कथम् ॥ २६ ॥ शिवं न जानामि कथं वदामि शिवं च जानामि कथं भजामि ॥ अहं शिवश्चेत्परमार्थतत्त्वं समस्वरूपं गगनोपमं च ॥ २७ ॥ नाहं तत्त्वं समं तत्त्वं कल्पनाहेतुवर्जितम् । ग्राह्यग्राहकनिर्मुक्तं स्वसंवेद्यं कथं भवेत् ॥ २८ ॥ अनन्तरूपं न हि वस्तु किंचित्तत्त्वस्वरूपं न हि वस्तु किंचित् । आत्मैकरूपं परमार्थतत्त्वं न हिंसको वापि न चापि हिंसा ॥ २९ ॥ विशुद्धोऽसि समं तत्त्वं विदेहमजमव्ययम् । विभ्रमः कथमात्मार्थे विभ्रान्तोऽहं कथं पुनः ॥३०॥ घटे भिन्ने घटाकाशं सुलीनं भेदवर्जितम् । शिवेन मनसा शुद्धो न भेदः प्रतिभाति मे ॥ ३१ ॥ न घटो न घटाकाशो न जीवो जीवविग्रहः । केवलं ब्रह्म संविद्धि वेद्यवेदकवर्जितम् ॥ ३२ ॥ सर्वत्र सर्वदा सर्वमात्मानं सततं ध्रुवम् । सर्वं शून्यमशून्यं च तन्मां विद्धि न संशयः ॥३३॥ वेदा न लोका न सुरा न यज्ञा वर्णाश्रमो नैव कुलं न जातिः । न धूममार्गो न च दीप्तिमार्गो ब्रह्मैकरूपं परमार्थतत्त्वम् ॥ ३४ ॥ व्याप्यव्यापकनिर्मुक्तं त्वमेकः सफलं यदि । प्रत्यक्षं चापरोक्षं च आत्मानं मन्यसे कथम् ॥३५॥ अद्वैतं केचिदिच्छन्ति द्वैतमिच्छन्ति चापरे । समं तत्त्वं न विन्दन्ति द्वैताद्वैतविवर्जितम् ॥ ३६ ॥ श्वेतादिवर्णरहितं शब्दादिगुणवर्जितम् । कथयन्ति कथं तत्त्वं मनोवाचामगोचरम् ॥ ३७ ॥ यदाऽनृतमिदं सर्वं देहादि गगनोपमम् । तदा हि ब्रह्म संवेत्ति न ते द्वैतपरंपरा ॥ ३८ ॥ परेण सहजात्मापि ह्यभिन्नः प्रतिभाति मे । व्योमाकारं तथैवैकं ध्याता ध्यानं कथं भवेत् ॥ ३९ ॥ यत्करोमि यदश्नामि यज्जुहोमि ददामि यत् । एतत्सर्वं न मे किंचिद्विशुद्धोऽहमजोऽव्ययः ॥ ४० ॥ सर्वं जगद्विद्धि निराकृतीदं सर्वं जगद्विद्धि विकारहीनम् । सर्वं जगद्विद्धि विशुद्धदेहं सर्वं जगद्विद्धि शिवैकरूपम् ॥ ४१ ॥ तत्त्वं त्वं हि न संदेहः कथं जानासि वा पुनः । असंवेद्यं स्वसंवेद्यमात्मानं मन्यसे कथम् ॥ ४२ ॥ मायामाया कथं तात छायाछाया न विद्यते । तत्त्वमेकमिदं सर्वं व्योमाकारं निरञ्जनम् ॥ ४३ ॥ आदिमध्यान्तमुक्तोऽहं न बद्धोऽहं कदाचन । स्वभावनिर्मलः शुद्ध इति मे निश्चिता मतिः ॥ ४४ ॥ महदादि जगत्सर्वं न किंचित्प्रतिभाति मे । ब्रह्मैव केवलं सर्वं कथं वर्णाश्रमस्थितिः ॥ ४५ ॥ जानामि सर्वथा सर्वमहमेकं निरन्तरम् । निरालम्बमशून्यं च शून्यं व्योमादिपञ्चकम् ॥ ४६ ॥ न षण्ढो न पुमान्न स्त्री न बोधो नैव

कल्पना । सानन्दो वा निरानन्दमात्मानं मन्यसे कथम् ॥ ४७ ॥ षडङ्गयोगेन तु नैव शुद्धं मनोविनाशेन तु नैव शुद्धम् । गुरूपदेशे तु नैव शुद्धं स्वयं च तत्त्वं स्वयमेव बुद्धम् ॥ ४८ ॥ नहि पञ्चात्मको देहो विदेहो वर्तते नहि । आत्मैव केवलं सर्वं तुरीयं च त्रयं कथम् ॥ ४९ ॥ न बद्धो नैव मुक्तोऽहं न चाहं ब्रह्मणः पृथक् । न कर्ता न च भोक्ताहं व्याप्यव्यापकवर्जितः ॥ ५० ॥ यथा जलं जले न्यस्तं सलिलं भेदवर्जितम् । प्रकृतिं पुरुषं तद्वदभिन्नं प्रतिभाति मे ॥ ५१ ॥ यदि नाम न मुक्तोऽसि न बद्धोऽसि कदाचन । साकारं च निराकारमात्मानं मन्यसे कथम् ॥ ५२ ॥ जानामि ते परं रूपं प्रत्यक्षं गगनोपमम् । यथाऽपरं *हि रूपं मरुमरीचिजलसन्निभम् ॥ ५३ ॥ न गुरुर्नोपदेशश्च न चोपाधिर्न मे* क्रिया । विदेहं गगनं विद्धि विशुद्धोऽहं स्वभावतः ॥५४॥ विशुद्धोऽस्य शरीरोऽसि न ते चित्तं परात्परम् । अहं चात्मा परं तत्त्वमिति वक्तुं न लज्जसे ॥ ५५ ॥ कथं रोदिषि रे चित्त ह्यात्मैवात्मात्मना भव । पिब वत्स कलातीतमद्वैतं परमामृतम् ॥ ५६ ॥ नैव बोधो न चाबोधो न बोधाबोध एव च । यस्येदृशः सदा बोधः स बोधो नान्यथा भवेत् ॥ ५७ ॥ ज्ञानं न तर्को न समाधियोगो न देश-*कालौ न गुरूपदेशः । स्वभावसंवित्तिरहं च तत्त्वमाकाशकल्पं सहजं ध्रुवं च* ॥ ५८ ॥ न जातोऽहं मृतो वापि न मे कर्म शुभाशुभम् । विशुद्धं निर्गुणं ब्रह्म बन्धो मुक्तिः कथं मम ॥ ५९ ॥ यदि सर्वगतो देवः स्थिरः पूर्णो निरन्तरः । अन्तरं हि न पश्यामि सबाह्याभ्यन्तरः कथम् ॥ ६० ॥ स्फुरत्येव जगत्कृत्स्नमखण्डितनिरन्तरम् । अहो मायामहामोहो द्वैताद्वैतविकल्पना ॥ ६१ ॥ साकारं च निराकारं नेति नेतीति सर्वदा । भेदाभेदविनिर्मुक्तो वर्तते केवलः शिवः ॥ ६२ ॥ न ते च माता न पिता न बंधुर्न ते च पत्नी न सुतश्च मित्रम् । न पक्षपातो न विपक्षपातः कथं हि संतप्तिरियं हि चित्ते ॥ ६३ ॥ दिवा नक्तं न ते चित्तं उदयास्तमयौ न हि । विदेहस्य शरीरत्वं कल्पयन्ति कथं बुधाः ॥६४॥ नाविभक्तं विभक्तं च नहि दुःखसुखादि च । नहि सर्वमसर्वं च विद्धि चात्मानमव्ययम् ॥ ६५ ॥ नाहं कर्ता न भोक्ता च न मे कर्म पुराधुना । न मे देहो विदेहो वा निर्ममेति ममेति किम् ॥ ६६ ॥ न मे रागादिको दोषो दुःखं देहादिकं न मे ॥ आत्मानं विद्धि मामेकं विशालं गगनोपमम् ॥ ६७ ॥ सखे मनः किं बहुजल्पितेन सखे मनः सर्वमिदं वितर्क्यम् ॥ यत्सारभूतं कथितं मया ते त्वमेव तत्त्वं गगनोपमोऽसि ॥ ६८ ॥ येन केनापि भावेन यत्र कुत्र मृता अपि । योगिनस्तत्र लीयन्ते घटाकाशमिवाम्बरे ॥ ६९ ॥ तीर्थे चान्त्यजगेहे वा नष्टस्मृतिरपि त्यजन् । समकाले तनुं मुक्तः कैवल्यव्यापको भवेत् ॥ ७० ॥

धर्मार्थकाममोक्षांश्च द्विपदादिचराचरम् । मन्यन्ते योगिनः सर्वं मरीचिजलसन्निभम् ॥ ७१ ॥ अतीतानागतं कर्म वर्तमानं तथैव च ॥ न करोमि न भुञ्जामि इति मे निश्चिता मतिः ॥ ७२ ॥ शून्यागारे समरसपूतस्तिष्ठन्नेकः सुखमवधूतः ॥ चरति हि नग्नस्त्यक्त्वा गर्वं विन्दति केवलमात्मनि सर्वम् ॥७३॥ त्रितयतुरीयं नहि नहि यत्र विन्दन्ति केवलमात्मनि तत्र । धर्माधर्मौ नहि नहि यत्र बद्धो मुक्तः कथमिह तत्र ॥ ७४ ॥ विन्दति विन्दति नहि नहि मन्त्रं छन्दोलक्षणं नहि नहि तंत्रम् । समरसमग्नो भावितपूतः प्रलपित मेतत् परमवधूतः ॥ ७५ ॥ सर्वशून्यमशून्यं च सत्यासत्यं न विद्यते । स्वभावभावतः प्रोक्तं शास्त्रसंवित्तिपूर्वकम् ॥ ७६ ॥

॥ इति श्रीदत्तात्रेयविरचतायामवधूतगीतायामात्मसंवित्युपदेशो नाम प्रथमोऽध्यायः ॥ १ ॥

---

## अध्याय २ रा

अवधूत उवाच ॥ बालस्य वा विषयभोगरतस्य वापि । मूर्खस्य सेवकजनस्य गृहस्थितस्य । एतद्गुरोः किमपि नैव न चिन्तनीयं । रत्नं कथं त्यजति कोऽप्यशुचौ प्रतिष्ठम् ॥ १ ॥ नैवात्र काव्यगुण एव तु चिन्तनीयो ग्राह्यः परं गुणवता खलु सार एव । सिन्दूरचित्ररहिता भुवि रूपशून्या पारं न किं नयति नौरिह गन्तुकामान् ॥ २ ॥ प्रयत्नेन विना येन निश्चलेन चलाचलम् । ग्रस्तं स्वभावतः शान्तं चैतन्यं गगनोपमम् ॥ ३ ॥ अयत्नाच्चालयेद्यस्तु एकमेव चराचरम् । सर्वगं तत्कथं भिन्नमद्वैतं वर्तते मम ॥ ४ ॥ अहमेव परं यस्मात्सारासारतरं शिवम् । गमागमविनिर्मुक्तं निर्विकल्पं निराकुलम् । । ५ ॥ सर्वावयवनिर्मुक्तं तदहं त्रिदशार्चितम् । संपूर्णत्वान्न गृण्हामि विभागं त्रिदशादिकम् ॥ ६ ॥ प्रमादेन न संदेहः किं करिष्यामि वृत्तिवान् । उत्पद्यन्ते विलीयन्ते वुद्वुदाश्च यथा जले ॥७॥ महदादीनि भूतानि समाप्यैवं सदैव हि । मृदुद्रव्येषु तीक्ष्णेषु गुडेषु कटुकेषु च ॥ ८ ॥ कटुत्वं चैव शैत्यत्वं मृदुत्वं च यथा जले । प्रकृतिः पुरुषस्तद्वदभिन्नं प्रतिभाति मे ॥ ९ ॥ सर्वाख्यारहितं यद्यत्सूक्ष्मात्सूक्ष्मतरं परम् । मनोबुद्धींद्रियातीतमकलङ्कं जगत्पतिम् ॥ १० ॥ ईदृशं सहजं यत्र अहं तत्र कथं भवे । त्वमेव हि कथं तत्र कथं तत्र चराचरम् ॥ ११ ॥ गगनोपमं तु यत्प्रोक्तं तदेव

गगनोपमम् । चैतन्यं दोषहीनं च सर्वज्ञं पूर्णमेव च ॥ १२ ॥ पृथिव्यां चरितं नैव मारुतेन च वाहितम् । वारिणा पिहितं नैव तेजोमध्ये व्यवस्थितम् ॥ १३ ॥ आकाशं तेन संव्याप्तं न तद्व्याप्तं च केनचित् । सबाह्याभ्यंतरं तिष्ठत्यवच्छिन्नं निरंतरम् ॥ १४ ॥ सूक्ष्मत्वात्तददृश्यत्वान्निर्गुणत्वाच्च योगिभिः । आलम्बनादि यत्प्रोक्तं क्रमादालम्बनं भवेत् ॥ १५ ॥ सतताऽभ्यासयुक्तस्तु निरालम्बो यदा भवेत् । तल्लयाल्लीयते नान्तर्गुणदोषविवर्जितः ॥ १६ ॥ विषविश्वस्य रौद्रस्य मोहमूर्च्छाप्रदस्य च । एकमेव विनाशाय ह्यमोघं सहजामृतम् ॥ १७ ॥ भावगम्यं निराकारं साकारं दृष्टिगोचरम् । भावाभावविनिर्मुक्तमन्तरालं तदुच्यते ॥१८॥ बाह्यभावं भवेद्विश्वमन्तःप्रकृतिरुच्यते । अन्तरादन्तरं ज्ञेयं नारिकेलफलाम्बुवत् ॥१९॥ भ्रान्तिज्ञानं स्थितं बाह्यं सम्यक् ज्ञानं च मध्यगम् । मध्यान्मध्यतरं ज्ञेयं नारिकेलफलाम्बुवत् ॥ २० ॥ पौर्णमास्यां यथा चन्द्र एक एवातिनिर्मलः ॥ तेन तत्सदृशं पश्येद्द्विधादृष्टिर्विपर्ययः ॥२१॥ अनेनैव प्रकारेण बुद्धिभेदो न सर्वगः । दाता च धीरतामेति गीयते नामकोटिभिः ॥ २२ ॥ गुरुप्रज्ञाप्रसादेन मूर्खो वा यदि पण्डितः । यस्तु संबुध्यते तत्त्वं विरक्तो भवसागरात् ॥ २३ ॥ रागद्वेष-विनिर्मुक्तः सर्वभूतहिते रतः । दृढबोधश्च धीरश्च स गच्छेत्परमं पदम् ॥२४॥ घटे भिन्ने घटाकाश आकाशे लीयते यथा । देहाभावे तथा योगी स्वरूपे परमात्मनि ॥ २५ ॥ उक्तेयं कर्ममुक्तानां मतिर्यान्तेऽपि सा गतिः । न चोक्ता योगयुक्तानां मतिर्यान्तेऽपि सा गतिः ॥ २६ ॥ या गतिः कर्मयुक्तानां सा च वागिन्द्रियाद्वदेत् । योगिनां या गतिः क्वापि ह्यकथ्या भवतोर्जिता ॥ २७ ॥ एवं ज्ञात्वा त्वमुं मार्गं योगिनां नैव कल्पितम् । विकल्पवर्जनं तेषां स्वयंसिद्धिः प्रवर्तते ॥ २८ ॥ तीर्थे वान्त्यजगेहे वा यत्र कुत्र मृतोऽपि वा । न योगी पश्यते गर्भं परे ब्रह्मणि लीयते ॥२९॥ सहजमजमचिन्त्यं यस्तु पश्येत्स्वरूपं घटति यदि यथेष्टं लिप्यते नैव दोषैः । सकृदपि तदभावात्कर्म किंचिन्न कुर्यात्तदपि न च विबद्धः संयमी वा तपस्वी ॥ ३० ॥ निरामयं निष्प्रतिमं निराकृतिं निराश्रयं निर्वपुषं निराशिषम् । निर्द्वन्द्वनिर्मोहमलुप्तशक्तिकं तमीशमात्मानमुपैति शाश्वतम् ॥ ३१ ॥ वेदो न दीक्षा न च मुण्डनक्रिया गुरुर्न शिष्यो नच यंत्रसंपदः । मुद्रा-दिकं चापि न यत्र भासते तमीशमात्मानमुपैति शाश्वतम् ॥ ३२ ॥ न शांभवं शाक्तिकमानवं न वा । पिण्डं च रूपं च पदादिकं न वा । आरम्भनिष्पत्तिघटादिकं च नो । तमीशमात्मानमुपैति शाश्वतम् ॥ ३३ ॥ यस्य स्वरूपात्सचराचरं जगदुत्पद्यते तिष्ठति लीयतेऽपि वा । पयोविकारादिव फेनबुद्बुदास्तमीशमात्मा-नमुपैति शाश्वतम् ॥ ३४ ॥ नासानिरोधो न च दृष्टिरासनं बोधोऽप्यबोधोऽपि

न यत्र भासते । नाडीप्रचारोऽपि न यत्र किंचित्तमीशमात्मानमुपैति शाश्वतम् ॥ ३५ ॥ नानात्वमेकत्वमुभत्वमन्यता अणुत्वदीर्घत्वमहत्त्वशून्यता । मानत्वमेयत्वसमत्ववर्जितं तमीशमात्मानमुपैति शाश्वतम् ॥ ३६ ॥ सुसंयमी वा यदि वा न संयमी सुसंग्रही वा यदि वा न संग्रही । निष्कर्मको वा यदि वा सकर्मकस्तमीशमात्मानमुपैति शाश्वतम् ॥ ३७ ॥ मनो न बुद्धिर्न शरीरमिन्द्रियं तन्मात्रभूतानि न भूतपञ्चकम् । अहंकृतिश्चापि वियत्स्वरूपकं तमीशमात्मानमुपैति शाश्वतम् ॥ ३८ ॥ विधौ निरोधे परमात्मतां गते न योगिनश्चेतसि भेदवर्जिते । शौचं न वाशौचमलिङ्गभावना सर्वं विधेयं यदि वा निषिध्यते ॥ ३९ ॥ मनो वचो यत्र न शक्तमीरितुं नूनं कथं तत्र गुरूपदेशता । इमां कथामुक्तवतो गुरोस्तद्युक्तस्य तत्त्वं हि समं प्रकाशते ॥ ४० ॥

॥ इति श्रीदत्तात्रेयविरचितायामवधूतगीतायामात्मसंवित्युपदेशो नाम द्वितीयोऽध्यायः ॥ २ ॥

---

## अध्याय ३ रा

अवधूत उवाच ॥ गुणविगुणविभागो वर्तते नैव किंचिद्रतिविरतिहीनं निर्मलं निष्प्रपञ्चम् । गुणविगुणविहीनं व्यापकं विश्वरूपं कथमहमिह वन्दे व्योमरूपं शिवं वै ॥ १ ॥ श्वेतादिवर्णरहितो नियतं शिवश्च कार्यं हि कारणमिदं हि परं शिवश्च । एवं विकल्परहितोऽहमलं शिवश्च । स्वात्मानमात्मनि सुमित्र कथं नमामि ॥ २ ॥ निर्मूलमूलरहितो हि सदोदितोऽहं निर्धूमधूमरहितो हि सदोदितोऽहम् । निर्दीपदीपरहितो हि सदोदितोऽहं ज्ञानामृतं समरसं गगनोपमोऽहम् । ॥ ३ ॥ निष्कामकाममिह नाम कथं वदामि निःसंगसंगमिह नाम कथं वदामि । निःसारसाररहितं च कथं वदामि ज्ञानामृतं समरसं गगनोपमोऽहम् ॥ ४ ॥ अद्वैतरूपमखिलं हि कथं वदामि द्वैतस्वरूपमखिलं हि कथं वदामि । नित्यं त्वनित्यमखिलं हि कथं वदामि ज्ञानामृतं समर० ॥ ५ ॥ स्थूलं हि नो नहि कृशं न गतागतं हि आद्यन्तमध्यरहितं न परात्परं हि । सत्यं वदामि खलु वै परमार्थतत्त्वं ज्ञानामृतं० ॥ ६ ॥ संविद्धि सर्वकरणानि नभोनिभानि संविद्धि सर्वविषयाश्च नभोनिभाश्च । संविद्धि चैकममलं न हि बन्धमुक्तं ज्ञानामृतं समरसं० ॥ ७ ॥ दुर्बोधबोध-

गहनो न भवामि तात दुर्लक्ष्यलक्ष्यगहनो न भवामि तात । आसन्नरूपगहनो न भवामि तात ज्ञानामृतं० ॥ ८ ॥ निष्कर्मकर्मदहनो ज्वलनो भवामि निर्दुःखदुःख-दहनो ज्वलनो भवामि । निर्देहदेहदहनो ज्वलनो भवामि ज्ञानामृतं० ॥ ९ ॥ निष्पापपापदहनो हि हुताशनोऽहं । निर्धर्मधर्मदहनो हि हुताशनोऽहम् । निर्बन्ध-बन्धदहनो हि हुताशनोऽहं ज्ञानामृतं० ॥ १० ॥ निर्भावभावरहितो न भवामि वत्स निर्योगयोगरहितो न भवामि वत्स । निश्चित्तचित्तरहितो न भवामि वत्स ज्ञानामृतं० ॥ ११ ॥ निर्मोहमोहपदवीति न मे विकल्पो निःशोकशोकपदवीति न मे विकल्पः । निर्लोभलोभपदवीति न मे विकल्पो ज्ञानामृतं ॥ १२ ॥ संसार-संततिलता न च मे कदाचित् संतोषसंततिसुखे न च मे कदाचित् । अज्ञान-बन्धनमिदं न च मे कदाचित् ज्ञानामृतं० ॥ १३ ॥ संसारसंततिरजो न च मे विकारः संतापसंततितमो न च मे विकारः । सत्त्वं स्वधर्मजनकं न च मे विकारो ज्ञानामृतं ॥ १४ ॥ संतापदुःखजनको न विधिः कदाचित् संतापयोगजनितं न मनः कदाचित् । यस्मादहंकृतिरियं न च मे कदाचित् ज्ञानामृतं० ॥ १५ ॥ निष्कम्पकम्पनिधनं न विकल्पकल्पं स्वप्नप्रबोधनिधनं न हिताहितं हि ॥ निःसार-सारनिधनं न चराचरं हि ज्ञानामृतं० ॥ १६ ॥ नो वेद्यवेदकमिदं न च हेतुतर्क्यं वाचामगोचरमिदं न मनो न बुद्धिः । एवं कथं हि भवतः कथयामि तत्त्वं ज्ञानामृतं० ॥ १७ ॥ निर्भिन्नभिन्नरहितं परमार्थतत्त्वमन्तर्बहिर्न हि कथं परमार्थतत्त्वम् । प्राक्संभवं न च रतं न हि वस्तु किञ्चिज्ज्ञानामृतं स० ॥ १८ ॥ रागादिदोषरहितं त्वहमेव तत्त्वं दैवादिदोषरहितं त्वहमेव तत्त्वम् । संसारशोकरहितं त्वहमेव तत्त्वम् ज्ञानामृतं० ॥ १९ ॥ स्थानत्रयं यदि च नेति कथं तुरीयं कालत्रयं यदि च नेति कथं दिशश्च । शान्तं पदं हि परमं परमार्थतत्त्वं ज्ञानामृतं० ॥ २० ॥ दीर्घो लघुः पुनरितीह न मे विभागो विस्तारसंकटमितीह न मे विभागः । कोणं हि वर्तुलमितीह न मे विभागो ज्ञानामृतं० ॥ २१ ॥ मातापितादि तनयादि न मे कदाचिज्जातं मृतं न च मनो न च मे कदाचित् । निर्व्याकुलं स्थिरमिदं परमार्थतत्त्वं ज्ञानामृतं० ॥ २२ ॥ शुद्धं विशुद्धमविचारमनन्तरूपं निर्लेपलेपम-विचारमनन्तरूपम् । निःखण्डखण्डमविचारमनन्तरूपं ज्ञानामृतं० ॥ २३ ॥ ब्रह्मादयः सुरगणाः कथमत्र संति स्वर्गादयो वसतयः कथमत्र संति । यद्येकरूप-ममलं परमार्थतत्त्वं ज्ञानामृतं० ॥ २४ ॥ निर्नेति नेति विमलो हि कथं वदामि निःशेषशेषविमलो हि कथं वदामि । निर्लिङ्गलिङ्गविमलो हि कथं वदामि ज्ञानामृतं० ॥ २५ ॥ निष्कर्मकर्मपरमं सततं करोमि निःसंगसंगरहितं परमं विनोदम् । निर्देहदेहरहितं सततं विनोदं ज्ञानामृतं० ॥ २६ ॥ माया प्रपञ्चरचना

न च मे विकारो कौटिल्यदम्भरचना न च मे विकारः । सत्यानृतेति रचना न च मे विकारो ज्ञानामृतं० ॥ २७ ॥ संध्यादिकालरहितं न च मे वियोगो ह्यन्तः-प्रबोधरहितं बधिरो न मूकः । एवं विकल्परहितं न च भावशुद्धं ज्ञानामृतं० ॥ २८ ॥ निर्नाथनाथरहितं हि निराकुलं वै निश्चित्तचित्तविगतं हि निराकुलं वै । संविद्धि सर्वविगतं हि निराकुलं वै ज्ञानामृतं० ॥ २९ ॥ कान्तारमन्दिरमिदं हि कथं वदामि संसिद्धसंशयमिदं हि कथं वदामि । एवं निरन्तरसमं हि निराकुलं वै ज्ञानामृतं० ॥ ३० ॥ निर्जीवजीवरहितं सततं विभाति । निर्बीजबीजरहितं सततं विभाति । निर्वाणबन्धरहितं सततं विभाति ज्ञानामृतं समरसं० ॥ ३१ ॥ संभूतिवर्जितमिदंसततं विभाति । संसारवर्जितमिदं सततं विभाति । संहार-वर्जितमिदं सततं विभाति ज्ञानामृतं० ॥ ३२ ॥ उल्लेखमात्रमपि ते न च नामरूपं निर्भिन्नभिन्नमपि ते न हि वस्तु किंचित् । निर्लज्जमानस करोषि कथं विषादं ज्ञानामृतं० ॥ ३३ ॥ किं नाम रोदिषि सखे न जरा न मृत्युः किं नाम रोदिषि सखे न च जन्मदुःखम् ॥ किं नाम रोदिषि सखे न च ते विकारो ज्ञानामृतं० ॥ ३४ ॥ किं नाम रोदिषि सखे न च ते स्वरूपं किं नाम रोदिषि सखे न च ते विरूपम् । किं नाम रोदिषि सखे न च ते वयांसि ज्ञानामृतं० ॥ ३५ ॥ किं नामरोदिषि सखे न च ते वयांसि किं नाम रोदिषि सखे न च ते मनांसि । किं नाम रोदिषि सखे न तवेन्द्रियाणि ज्ञानामृतं० ॥ ३६ ॥ किं नाम रोदिषि सखे न च तेऽस्ति कामः किं नाम रोदिषि सखे न च ते प्रलोभः । किं नाम रोदिषि सखे न च ते विमोहो ज्ञानामृतं० ॥ ३७ ॥ ऐश्वर्यमिच्छसि कथं न च ते धनानि ऐश्वर्यमिच्छसि कथं न च ते हि पत्नी । ऐश्वर्यमिच्छसि कथं न च ते ममेति ज्ञानामृतं० ॥ ३८ ॥ लिङ्गप्रपञ्चजनुषी न च ते न मे च निर्लज्जमानसमिदं च विभाति भिन्नम् । निर्भेदभेदरहितं न च ते न मे च ज्ञानामृतं० ॥ ३९ ॥ नो वाणुमात्रमपि ते हि विरागरूपं नो वाणुमात्रमपि ते हि सरागरूपम् । नो वाणुमात्रमपि ते हि सकामरूपं ज्ञाना० ॥ ४० ॥ ध्याता न ते हि हृदयं नच ते 'समाधिर्ध्यानं न ते हि हृदये न बहिःप्रदेशः । ध्येयं न चेति हृदयं न हि वस्तुकालो ज्ञाना० ॥ ४१ ॥ यत्सारभूतमखिलं कथितं मया ते न त्वं न मे न महतो न गुरुर्नशिष्यः । स्वच्छन्दरूपसहजं परमार्थतत्त्वं ज्ञानामृतं० ॥ ४२ ॥ कथमिह परमार्थं तत्त्वमानन्दरूपं कथमिह परमार्थं नैवमानन्दरूपम् । कथमिह परमार्थं ज्ञानविज्ञानरूपं यदि परमहमेकं वर्तते व्योमरूपम् ॥ ४३ ॥ दहनपवनहीनं विद्धि विज्ञानमेकमवनिजलविहीनं विद्धि विज्ञानरूपम् । समगमनविहीनं विद्धि विज्ञानमेकं गगनमिव विशालं विद्धि विज्ञानमेकम्

॥ ४४ ॥ न शून्यरूपं न विशून्यरूपं न शुद्धरूपं न विशुद्धरूपम् । रूपं विरूपं न भवामि किंचित्स्वरूपरूपं परमार्थतत्त्वम् ॥ ४५ ॥ मुञ्च मुञ्च हि संसारं त्यागं मुञ्च हि सर्वथा ॥ त्यागात्यागविषं शुद्धममृतं सहजं ध्रुवम् ॥ ४६ ॥

॥ इति श्रीदत्तात्रेयविरचितायामवधूतगीतामायामात्मसंवित्युपदेशो नाम तृतीयोऽध्यायः ॥ ३ ॥

---

## अध्याय ४ था

श्रीदत्त उवाच ॥ नावाहनं नैव विसर्जनं वा पुष्पाणि पत्राणि कथं भवन्ति ॥ ध्यानानि मन्त्राणि कथं भवन्ति समासमं चैव शिवार्चनं च ॥ १ ॥ न केवलं बन्धविबन्धमुक्तो न केवलं शुद्धविशुद्धमुक्तः । न केवलं योगवियोगमुक्तः स वै विमुक्तो गगनोपमोऽहम् ॥ २ ॥ संजायते सर्वमिदं हि तथ्यं संजायते सर्वमिदं वितथ्यम् ॥ एवं विकल्पो मम नैव जातः स्वरूपनिर्वाणमनामयोऽहम् ॥ ३ ॥ न साञ्जनं चैव निरञ्जनं वा न चान्तरं वापि निरन्तरं वा ॥ अन्तर्विभिन्नं नहि मे विभाति स्वरूपनिर्वाणमनामयोऽहम् ॥ ४ ॥ अबोधबोधो मम नैव जातो बोधस्वरूपं मम नैव जातम् ॥ निर्बोधबोधं च कथं वदामि स्वरूपनिर्वाणमनामयोऽहम् ॥ ५ ॥ न धर्मयुक्तो न च पापयुक्तो न बन्धयुक्तो न च मोक्षयुक्तः ॥ युक्तं वियुक्तं न च मे विभाति स्वरूप० ॥ ६ ॥ परापरं वा न च मे कदाचिन्मध्यस्थभावो हि न चारिमित्रम् ॥ हिताहितं चापि कथं वदामि स्व० ॥ ७ ॥ नोपासको नैवमुपास्यरूपं न चोपदेशो न च मे क्रिया च । संवित्स्वरूपं च कथं वदामि स्व० ॥ ८ ॥ नो व्यापकं व्याप्यमिहास्ति किंचिन्न चालयं वापि निरालयं वा । अशून्यशून्यं च कथं वदामि स्वरूप० ॥ ९ ॥ न ग्राहको ग्राह्यकमेव किंचिन्न कारणं वा मम नैव कार्यम् । अचिंत्यचिंत्यं च कथं वदामि स्वरूप० ॥ १० ॥ न भेदकं वापि न चैव भेद्यं न वेदकं वा मम नैव वेद्यम् । गतागतं तात कथं वदामि स्वरूप० ॥ ११ ॥ न चास्ति देहो न च मे विदेहो बुद्धिर्मनो मे न हि चेंद्रियाणि । रागो विरागश्च कथं वदामि स्वरूप० ॥ १२ ॥ उल्लेखमात्रं न हि भिन्नमुच्चैरुल्लेखमात्रं न तिरोहितं वै । समासमं मित्र कथं वदामि स्वरूप० ॥१३॥ जितेंद्रियोऽहं त्वजितेंद्रियो वा न संयमो नियमो न जातः । जयाजयौ मित्र कथं वदामि स्वरूप० ॥ १४ ॥ अमूर्तमूर्तिर्न च मे कदाचिदाद्यन्तमध्यं न च मे

कदाचित्। बलाबलं मित्र कथं वदामि स्व० ॥ १५ ॥ मृतामृतं वापि विषाविषं च संजायते तात न मे कदाचित्। अशुद्धशुद्धं च कथं वदामि स्व० ॥ १६ ॥ स्वप्नः प्रबोधो न च योगमुद्रा नक्तं दिवा वापि न मे कदाचित्। अतुर्यतुर्यं च कथं वदामि स्वरूप० ॥ १७ ॥ संविद्धि मां सर्वविसर्वमुक्तं माया विमाया न च मे कदाचित्। संध्यादिकं कर्म कथं वदामि स्वरूप० ॥ १८ ॥ संविद्धि मां सर्वसमाधियुक्तं संविद्धि मां लक्ष्यविलक्ष्यमुक्तम्। योगं वियोगं च कथं वदामि स्वरूप० ॥ १९ ॥ मूर्खोऽपि नाहं न च पण्डितोऽहं मौनं विमौनं न च मे कदाचित्। तर्कं वितर्कं च कथं वदामि स्वरूप० ॥ २० ॥ पिता च माता च कुलं न जातिर्जन्मादिमृत्युर्न च मे कदाचित्। स्नेहं विमोहं च कथं वदामि स्वरूप० ॥ २१ ॥ अस्तं गतो नैव सदोदितोऽहं तेजो वितेजो न च मे कदाचित्। संध्यादिकं कर्म कथं वदामि स्वरूप० ॥ २२ ॥ असंशयं विद्धि निराकुलं मामसंशयं विद्धि निरन्तरं माम्। असंशयं विद्धि निरञ्जनं मां स्वरूप० ॥२३॥ ध्यानानि सर्वाणि परित्यजन्ति शुभाशुभं कर्म परित्यजन्ति। त्यागामृतं तात पिबन्ति धीराः स्वरूप० ॥ २४ ॥ विदन्ति विदन्ति नहि नहि यत्र छन्दोलक्षणं नहि नहि तत्र। समरसमग्नो भावितपूतः प्रलपति तत्त्वं परमवधूतः ॥ २५ ॥

॥ इति श्रीदत्तात्रेयविरचितायामवधूतगीतायां स्वामिकार्तिकसंवादे स्वात्मसंवित्युपदेशे स्वरूपनिर्णयो नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## अध्याय ५ वा.

श्रीदत्त उवाच ॥ ॐमिति गदितं गगनसमं तत्र परापरसारविचार इति। अविलासविलासनिराकरणं कथमक्षरबिन्दुसमुच्चरणम् ॥ १ ॥ इति तत्त्वमसिप्रभृतिश्रुतिभिः प्रतिपादितमात्मनि तत्त्वमसि। त्वमुपाधिविवर्जितसर्वसमं किमु रोदिषि मानसि सर्वसमम् ॥२॥ अधऊर्ध्वविवर्जितसर्वसमं बहिरन्तरवर्जितसर्वसमम्। यदि चैकविवर्जितसर्वसमं किमु रोदिषि मानसि सर्वसमम् ॥ ३ ॥ नहि कल्पितकल्पविचार इति नहि कारणकार्यविचार इति। पदसंधिविवर्जितसर्वसमं किमु० ॥ ४ ॥ नहि बोधविबोधसमाधिरिति नहि देशविदेशसमाधिरिति। नहि कालविकालसमाधिरिति किमु० ॥ ५ ॥ नहि कुंभनभो नहि कुंभ इति नहि जीववपुर्नहि जीव इति। नहि कारणकार्यविभाग इति किमु० ॥ ६ ॥

इह सर्वनिरन्तरमोक्षपदं लघुदीर्घविचारविहीन इति। नहि वर्तुलकोणविभाग इति किमु रोदिषि० ॥ ७ ॥ इह शून्यविशून्यविहीन इति इह शुद्धविशुद्धविहीन इति। इह सर्वविसर्वविहीन इति किमु रोदिषि० ॥ ८ ॥ नहि भिन्नविभिन्न-विचार इति बहिरन्तरसंधिविचार इति। अरिमित्रविवर्जितसर्वसमं किमु रोदिषि ॥ ९ ॥ नहि शिष्यविशिष्यसरूप इति न चराचरभेदविचार इति। इह सर्व-निरन्तरमोक्षपदं किमु० ॥ १० ॥ ननु रूपविरूपविहीन इति ननु भिन्नविभिन्न-विहीन इति। ननु सर्गविसर्गविहीन इति किमु रोदिषि० ॥ ११ ॥ न गुणागुण-पाशनिबन्ध इति मृतजीवनकर्म करोमि कथम्। इति शुद्धनिरञ्जनसर्वसमं किमु ॥ १२ ॥ इह भावविभावविहीन इति इह कामविकामविहीन इहि। इहि बोधतमं खलु मोक्षसमं किमु० ॥ १३ ॥ इह तत्त्वनिरन्तरतत्त्वमिति नहि संधिविसंधि-विहीन इति। यदि सर्वविवर्जितसर्वसमं किमु० ॥ १४ ॥ अनिकेतकुटीपरिवारसमं इह संगविसंगविहीनपरम्। इह बोधविबोधविहीनपरं किमु० ॥१५॥ अविकार-विकारमसत्यमिति अविलक्षविलक्षमसत्यमिति। यदि केवलमात्मनि सत्यमिति किमु० ॥ १६ ॥ इह सर्वतमं खलु जीव इति इह सर्वनिरन्तरजीव इति। इह केवलनिश्चलजीव इति किमु० ॥ १७ ॥ अविवेकविवेकमबोध इति अविकल्प-विकल्पमबोध इति। यदि चैकनिरन्तरबोध इति किमु० ॥ १८ ॥ नहि मोक्षपदं नहि बन्धपदं नहि पुण्यपदं नहि पापपदम्। नहि पूर्णपदं नहि रिक्तपदं किमु० ॥ १९ ॥ यदि वर्णविवर्णविहीनसमं यदि कारणकार्यविहीनसमम्। यदि भेदविभेदविहीनसमं किमु०॥ २० ॥ इह सर्वनिरन्तरसर्वचिते इह केवलनिश्चल-सर्वचिते। द्विपदादिविवर्जितसर्वचिते किमु० ॥ २१ ॥ अतिसर्वनिरन्तरसर्वगतं रतिनिर्मलनिश्चलसर्वगतम्। दिनरात्रिविवर्जितसर्वगतं किमु० ॥ २२ ॥ नहि बन्धविबन्धसमागमनं नहि योगवियोगसमागमनम्। नहि तर्कवितर्कसमागमनं किमु रोदिषि० ॥ २३ ॥ इह कालविकालनिराकरणमणुमात्रकृशानुनिराकरणम्। नहि केवलसत्यनिराकरणं किमु रोदिषि० ॥ २४ ॥ इह देहविदेहविहीन इति ननु स्वप्नसुषुप्तिविहीनपरम्। अभिधानविधानविहीनपरं किमु रोदिषि ॥२५॥ गगनोपमशुद्धविशालसमं अविसर्वविवर्जितसर्वसमम्। गतसारविचारविकारसमं किमु रोदिषि० ॥ २६ ॥ इह धर्मविधर्मविरागतरं इह वस्तुविवस्तुविरागतरम्। इह कामविकामविरागतरं किमु रोदिषि० ॥ २७ ॥ सुखदुःखविवर्जितसर्वसमिह शोकविशोकविहीनपरम्। गुरुशिष्यविवर्जिततत्त्वपरं किमु रोदिषि० ॥ २८ ॥ न किलांकुरसारविसार इति न चलाचलसाम्यविसाम्यमिति। अविचारविचार-विहीनमिति किमु० ॥ २९ ॥ इह सारसमुच्चयसारमिति कथितं निजभाव-

विभेद इति । विषये करणत्वमसत्यमिति किमु० ॥ ३० ॥ बहुधा श्रुतयः प्रवदन्ति यतो वियदादिरिदं मृगतोयसमम् । यदि चैकनिरन्तरसर्वसमं किमु० ॥ ३१ ॥ विदन्ति विदन्ति नहि नहि यत्र छन्दो लक्षणं नहि नहि तत्र । समरसमग्नो भावितपूतः प्रलपति तत्त्वं परमवधूतः ॥ २ ॥

॥ इति श्रीदत्तात्रेयविरचितायामवधूतगीतायां स्वामिकार्तिकसंवादे आत्मसंवित्त्युपदेशे समदृष्टिकथनं नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

## अध्याय ६ वा.

श्रीदत्त उवाच ॥ बहुधा श्रुतयः प्रवदन्ति वयं वियदादिरिदं मृगतोयसमम् । यदि चैकनिरन्तरसर्वशिवमुपमेयमथो ह्युपमा च कथम् ॥ १ ॥ अविभक्तिविभक्तिविहीनपरं ननु कार्यविकार्यविहीनपरम् । यदि चैकनिरन्तरसर्वशिवं यजनं च कथं तपनं च कथम् ॥ २ ॥ मन एव निरन्तरसर्वगतं ह्यविशालविशालविहीनपरम् । मन एव निरन्तरसर्वशिवं मनसापि कथं वचसा च कथम् ॥ ३ ॥ दिनरात्रिविभेदनिराकरणमुदितानुदितस्य निराकरणम् । यदि चैकनिरन्तरसर्वशिवं रविचन्द्रमसौ ज्वलनश्च कथम् ॥ ४ ॥ गतकामविकामविभेद इति गतचेष्टविचेष्टविभेद इति । यदि चैकनिरन्तरसर्वशिवं बहिरन्तरभिन्नमतिश्च कथम् ॥ ५ ॥ यदि सारविसारविहीन इति यदि शून्यविशून्यविहीन इति । यदि चैकनिरन्तरसर्वशिवं प्रथमं च कथं चरमं च कथम् ॥ ६ ॥ यदि भेदविभेदनिराकरणं यदि वेदकवेद्यनिराकरणम् । यदि चैकनिरन्तरसर्वशिवं तृतीयं च कथं तुरीयं च कथम् ॥ ७ ॥ गदितागदितं नहि सत्यमिति विदिताविदितं नहि सत्यमिति । यदि चैकनिरन्तरसर्वशिवं विषयेन्द्रियबुद्धिमनांसि कथम् ॥ ८ ॥ गगनं पवनो नहि सत्यमिति धरणी दहनो नहि सत्यमिति । यदि चैकनिरन्तरसर्वशिवं जलदश्च कथं सलिलं च कथम् ॥ ९ ॥ यदि कल्पितलोकनिराकरणं यदि कल्पितदेवनिराकरणम् । यदि चैकनिरन्तरसर्वशिवं गुणदोषविचारमतिश्च कथम् ॥ १० ॥ मरणामरणं हि निराकरणं करणाकरणं हि निराकरणम् । यदि चैकनिरन्तरसर्वशिवं गमनागमनं हि कथं वदति ॥ ११ ॥ प्रकृतिः पुरुषो नहि भेद इति नहि कारणकार्यविभेद इति । यदि चैकनिरन्तरसर्वशिवं पुरुषापुरुषं च कथं वदति ॥ १२ ॥ तृतीयं नहि दुःखसमागमनं न गुणाद्द्वितीयस्य समागमनम् ।

यदि चैकनिरन्तरसर्वशिवं स्थविरश्च युवा च शिशुश्च कथम् ॥ १३ ॥ ननु आश्रमवर्णविहीनपरं ननु कारणकर्तृविहीनपरम् । यदि चैकनिरन्तरसर्वशिवमविनष्टविनष्टमतिश्च कथम् ॥१४॥ ग्रसिताग्रसितं च वितथ्यमिति जनिताजनितं च वितथ्यमिति । यदि चैकनिरन्तरसर्वशिवमविनाशिविनाशि कथं हि भवेत् ॥ १५ ॥ पुरुषापुरुषस्य विनष्टमिति वनितावनितस्य विनष्टमिति । यदि चैकनिरन्तरसर्वशिवमविनोदविनोदमतिश्च कथम् ॥ १६ ॥ यदि मोहविषादविहीनपरो यदि संशयशोकविहीनपरः । यदि चैकनिरन्तरसर्वशिवमहमिति ममेति कथं च पुनः ॥ १७ ॥ ननु धर्मविधर्मविनाश इति ननु बन्धविबन्धविनाश इति । यदि चैकनिरन्तरसर्वशिवमिह दुःखविदुःखमतिश्च कथम् ॥ १८ ॥ नहि याज्ञिकयज्ञिविभाग इति न हुताशनवस्तुविभाग इति । यदि चैकनिरन्तरसर्वशिवं वद कर्मफलानि भवन्ति कथम् ॥१९॥ ननु शोकविशोकविमुक्त इति ननु दर्पविदर्पविमुक्त इति यदि चैकनिरन्तरसर्वशिवं ननु रागविरागमतिश्च कथम् ॥ २० ॥ नहि मोहविमोहविकार इति नहि लोभविलोभविकार इति । यदि चैकनिरन्तरसर्वशिवं ह्यविवेकविवेकमतिश्च कथम् ॥ २१ ॥ त्वमहं नहि हंत कदाचिदपि कुलजातिविचारसत्यमिति । अहमेव शिवः परमार्थ इति अभिवादनमत्र करोमि कथम् ॥ २२ ॥ गुरुशिष्यविचारविशीर्ण इति उपदेशविचारविशीर्ण इति । अहमेव शिवः परमार्थ इति अभिवादनमत्र करोमि कथम् ॥ ३२ ॥ नहि कल्पितदेहविभाग इति । अहमेव शिवः परमार्थ इति अभिवादनमत्र करोमि कथम् ॥२४॥ सरजो विरजो न कदाचिदपि ननु निर्मलनिश्चलशुद्ध इति । अहमेव शिवः परमार्थ इति । अभिवादनमत्र करोमि कथम् ॥ २५ ॥ नहि देहविदेहविकल्प इति अनृतं चरितं न हि सत्यमिति । अहमेव शिवः परमार्थ इति अभिवादनमत्र करोमि कथम् ॥ २६ ॥ विन्दति विन्दति नहि नहि यत्र छन्दोलक्षणं नहि नहि तत्र । समरसमग्नो भावितपूतः प्रलपति तत्त्वं परमवधूतः ॥ २७ ॥

॥ इति श्रीदत्तात्रेयविरचितायामवधूतगीतायां स्वामिकार्तिकसंवादे स्वात्मसंवित्त्युपदेशे मोक्षनिर्णयो नाम षष्ठोऽध्यायः ॥ ६ ॥

## अध्याय ७ वा.

श्रीदत्त उवाच ॥ रथ्याकर्पटविरचितकन्थः पुण्यापुण्यविवर्जितपन्थः। शून्यागारे तिष्ठति नग्नो। शुद्धनिरञ्जनसमरसमग्नः ॥ १ ॥ लक्ष्यालक्ष्यविवर्जितलक्षो युक्तायुक्तविवर्जितदक्षः। केवलतत्त्वनिरञ्जनपूतो वादविवादः कथमवधूतः ॥ २ ॥ आशापाशविबन्धनमुक्तः शौचाचारविवर्जितयुक्तः । एवं सर्वविवर्जितसंतस्तत्त्वं शुद्धनिरञ्जनवन्तः ॥ ३ ॥ कथमिह देहविदेहविचारः कथमिह रागविरागविचारः। निर्मलनिश्चलगगनाकारं स्वयमिह तत्त्वं सहजाकारम् ॥ ४ ॥ कथमिह तत्त्वं विन्दति यत्र रूपमरूपं कथमिह तत्र। गगनाकारः परमो यत्र विषयीकरणं कथमिह तत्र ॥ ५ ॥ गगनाकारनिरन्तरहंसस्तत्त्वविशुद्धनिरञ्जनहंसः। एवं कथमिह भिन्नविभिन्नं बन्धविबन्धविकारविभिन्नम् ॥ ६ ॥ केवलतत्त्वनिरन्तरसर्वं योगवियोगौ कथमिह गर्वम्। एवं परमनिरन्तरसर्वमेवं कथमिह सारविसारम् ॥ ७ ॥ केवलतत्त्वनिरञ्जनसर्वं गगनाकारनिरन्तरशुद्धम्। एवं कथमिह संगविसंगं सत्यं कथमिह रङ्गविरङ्गम् ॥ ८ ॥ योगवियोगैः रहितो योगी भोगविभोगैः रहितो भोगी। एवं चरति हि मन्दंमन्दं मनसा कल्पितसहजानन्दम् ॥ ९ ॥ बोधविबोधैः सततं युक्तो द्वैताद्वैतैः कथमिह मुक्तः। सरजा विरजा कथमिह योगी शुद्धनिरञ्जनसमरसभोगी ॥ १० ॥ भग्नाभग्नविवर्जितभग्नो लग्नालग्नविवर्जितलग्नः। एवं कथमिह सारविसारः समरसतत्त्वं गगनाकारः ॥ ११ ॥ सततं सर्वविवर्जितयुक्तः सर्वं तत्त्वविवर्जितमुक्तः। एवं कथमिह जीवितमरणं ध्यानध्यानैः कथमिह करणम् ॥ १२ ॥ इन्द्रजालमिदं सर्वं यथा मरुमरीचिका। अखण्डितमनाकारो वर्तते केवलः शिवः ॥ १३ ॥ धर्मादौ मोक्षपर्यन्तं निरीहाः सर्वथा वयम्। कथं रागविरागाभ्यां कल्पयन्ति विपश्चितः ॥ १४ ॥ विदन्ति विदन्ति नहि नहि यत्र छन्दोलक्षणं नहि नहि तत्र। समरसमग्नो भावितपूतः प्रलपति तत्त्वं परमवधूतः ॥ १५ ॥

॥ इति श्रीदत्तात्रेयविरचितायां स्वामिकार्तिकसंवादे स्वात्मसंवित्त्युपदेशे सप्तमोऽध्यायः ॥ ७ ॥

# अयाय ८ वा.

श्रीदत्त उवाच ॥ त्वद्यात्रया व्यापकता हता ते ध्यानेन चेतःपरता हृता ते । स्तुत्या मया वाक्परता हृता ते क्षमस्व नित्यं त्रिविधापराधान् ॥१॥ कामैरहतधीर्दान्तो मृदुः शुचिरकिंचनः । अनीहो मितभुक् शान्तः स्थिरो मच्छरणो मुनिः ॥ २ ॥ अप्रमत्तो गम्भीरात्मा धृतिमान् जितषड्गुणः । अमानी मानदः कल्पो मैत्रः कारुणिकः कविः ॥ ३ ॥ कृपालुरकृतद्रोहस्तितिक्षुः सर्वदेहिनाम् । सत्यसारोऽनवद्यात्मा समः सर्वोपकारकः ॥ ४ ॥ अवधूतलक्षणं वर्णैर्ज्ञातव्यं भगवत्तमैः । वेदवर्णार्थतत्त्वज्ञैर्वेदवेदान्तवादिभिः ॥ ५ ॥ आशापाशविनिर्मुक्त आदिमध्यान्तनिर्मलः । आनन्दे वर्तते नित्यमकारं तस्य लक्षणम्॥६॥ वासना वर्जिता येन वक्तव्यं च निरामयम् । वर्तमानेषु वर्तेत वकारं तस्य लक्षणम् ॥ ७ ॥ धूलिधूसरगात्राणि धूतचित्तो निरामयः । धारणाध्याननिर्मुक्तो धूकारस्तस्य लक्षणम् ॥ ८ ॥ तत्त्वचिंता धृता येन चिंताचेष्टाविवर्जितः । तमोहंकारनिर्मुक्तस्तकारस्तस्य लक्षणम् ॥ ९ ॥ आत्मानं चामृतं हित्वा अभिन्नं मोक्षमव्ययम् । गतो हि कुत्सितः काको वर्तते नरकंप्रति ॥ १० ॥ मनसा कर्मणा वाचा त्यज्यतां मृगलोचना । न ते स्वर्गोऽपवर्गो वा सानन्द हृदयं यदि ॥ ११ ॥ न जानामि कथं तेन निर्मिता मृगलोचना । विश्वासघातकीं विद्धि स्वर्गमोक्षसुखार्गलाम् ॥१२॥ मूत्रशोणितदुर्गंधे ह्यमेध्यद्वारदूषिते । चर्मकुंडे ये रमन्ति ते लिप्यन्ते न संशयः ॥ १३ ॥ कौटिल्यदम्भसंयुक्ता सत्यशौचविवर्जिता । केनापि निर्मिता नारी बन्धनं सर्वदेहिनाम् ॥ १४ ॥ त्रैलोक्यजननी धात्री सा भगी नरको ध्रुवम् । तस्यां जातो रतस्तत्र हाहा संसारसंस्थितिः ॥ १५ ॥ जानामि नरकं नारी ध्रुवं जानामि बन्धनम् । यस्यां जातो रतस्तत्र पुनस्तत्रैव धावति ॥ १६ ॥ भगादिकुचपर्यन्तं संविद्धि नरकार्णवम् । ये रमन्ति पुनस्तत्र तरन्ति नरकं कथम् ॥ १७ ॥ विष्ठादिनरकं घोरं भगं च परिनिर्मितम् । किमु पश्यति रे चित्त कथं तत्रैव धावसि ॥ १८ ॥ भगेन चर्मकुण्डेन दुर्गन्धेन व्रणेन च । खण्डितं हि जगत्सर्वं सदेवासुरमानुषम् ॥ १९ ॥ देहार्णवे महाघोरे पूरितं चैव शोणितम् । केनापि निर्मिता नारी भगं चैव ह्यधोमुखम् ॥ २० ॥ अन्तरे नरकं विद्धि कौटिल्यं बाह्यमण्डितम् । ललितामिह पश्यन्ति महामन्त्रविरोधिनीम् ॥ २१ ॥ अज्ञात्वा जीवितं लब्धं भवस्तत्रैव देहिनाम् । अहो जातो रतस्तत्र अहो भवविडम्बना ॥ २२ ॥ तत्र मुग्धा रमन्ते ज सदेवासुरमानवाः । ते यान्ति नरकं घोरं सत्यमेव न संशयः ॥ २३ ॥ अग्निकुण्डसमा नारी घृतकुम्भसमो नरः । संसर्गेण

विलीयेत तस्मात्तां परिवर्जयेत् ॥ २४ ॥ गौडी माध्वी तथा पैष्ठी विज्ञेया त्रिविधा सुरा। चतुर्थी स्त्री सुरा ज्ञेया ययेदं मोहितं जगत् ॥ २५ ॥ मद्यपानं महापापं नारीसंगस्तथैव च। तस्माद्द्वयं परित्यज्य तत्त्वनिष्ठो भवेन्मुनिः ॥२६॥ चित्तायत्तं धातुबद्धं शरीरं नष्टे चित्ते धातवो यान्ति नाशम्। तस्माच्चित्तं सर्वतो रक्षणीयं स्वस्थे चित्ते बुद्धयः संभवन्ति ॥ २७ ॥ दत्तात्रेयावधूतेन निर्मितानन्दरूपिणा। ये पठन्ति च शृण्वन्ति तेषां नैव पुनर्भवः ॥ २८ ॥

॥ इति श्रीदत्तात्रेयकृतायामवधूतगीतायां स्वामिकार्तिकसंवादे स्वात्मसंवित्त्युपदेशेऽष्टमोऽध्यायः ॥ ८ ॥

---

## श्रीगुरुचरित्रातील श्रीगुरुगीता

श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥ श्रीगुरुभ्यो नमः ॥ नामधारक शिष्य सगुण। लागे सिद्धाच्या चरणा। विनवीतसे सुलक्षणा। करी नमस्कार अष्टांगें ॥ १ ॥ जयजयाजी सिद्धमुनि। तूं राजयोगी ब्रह्मज्ञानी। गुरुचरित्र दाविलें नयनीं। कृपासागरा गुरुमूर्ति ॥ २ ॥ स्वामी निरोपिले सकळ धर्म। त्याणें झालें निःशेष कर्म। साध्य झालें परावर्म। तुझिये कृपें दातारा ॥ ३ ॥ (श्लोक) 'अनादिघोरसंसार-ध्वांतध्वंसैकहेतवे। नमः श्रीनाथवैद्याय, भवौषध-विधायिने ॥ १ ॥' (टीका) संसारसागर पहातां। अनादि नाहीं आदिअंता। महाघोर मलबद्धता। उत्तीर्णता नाहीं याकारणें ॥ ४ ॥ म्हणोनि शरण रिघावें ॥ तो तारक या भवार्णवा पहावें। औषध घ्यावें मनोभावें। आरोग्य होय तात्काळीं ॥ ५ ॥ ऐसा आगमनिगमसिद्धान्त। बोलताति बुद्धिवंत। युगायुगीं फिरत जात। या संसारसागरीं ॥६॥ गुरुभक्ति म्हणिजे कामधेनु। जे आचरती विद्वज्जनु। वशिष्ठादि शुकमुनि। सारज्ञ जे शास्त्रांचे ॥ ७ ॥ ईश्वरपार्वती-संवाद। कथा निर्मळ अति विनोद। ते आचरती मुक्तिपद। हा मार्ग सद्-गुरुचा ॥ ८ ॥ पार्वती पुशिलें ईश्वराप्रती। ईश्वरें सांगितलें कवणें रीतीं। जेणें लोक उद्धरती। ते निरोपावें दातारा ॥ ९ ॥ शिष्यप्रश्न ऐकोनि। संतोष पावला सिद्धमुनि। धन्य धन्य तुझे जीवनी। गुरुसेवातत्पर बाळका ॥ १० ॥ तुवां पुसिलें अनादि कथन। जेणें होय मोहशमन। अज्ञानपण सांडोनि दृढ मन। सूर्यप्रकाश जेवीं लोकांसी ॥ ११ ॥ ऐक वत्सा गुरुदास्यका। मला केला तुवां प्रश्न निका। सांगेन आतां कुळदीपका। एकचित्तें अवधारीं ॥१२॥ पूर्वी

कैलासशिखरीं । बैसला होता त्रिपुरारि । प्रश्न करी शैल्यकुमरी । समस्त लोक उद्धरावया ॥ १३॥ श्रीगुरुगीता प्रारंभः॥ ॐ अस्य श्रीगुरुगीतास्तोत्रमंत्रस्य भगवान् सदाशिवऋषिः । नानाविधानि छंदांसि । श्रीगुरुपरमात्मा देवता । हं बीजं । सः शक्तिः। क्रों कीलकं। श्रीगुरुप्रसादसिद्धचर्थे जपे विनियोगः ॥ (अथ करन्यासाः) ॥ ॐ हं सां सूर्यात्मने अंगुष्ठाभ्यां नमः । ॐ हं सीं सोमात्मने तर्जनीभ्यां नमः । ॐ हं सूं निरंजनात्मने मध्यमाभ्यां नमः। ॐ हं सें निराभासात्मने अनामिकाभ्यां नमः । ॐ हं सौं अतनुसूक्ष्मात्मने कनिष्ठिकाभ्यां नमः । ॐ हं सः अव्यक्तात्मने करतलकरपृष्ठाभ्यां नमः । ( अथ हृदयादिन्यासाः ) ॐ हं सां सूर्यात्मने हृदयाय नमः । ॐ हं सीं सोमात्मने शिरसे स्वाहा । ॐ हं सूं निरंजनात्मने शिखायै वषट् । ॐ हं सें निराभासात्मने कवचाय हुं । ॐ हं सौं अतनुसूक्ष्मात्मने नेत्रत्रयाय वौषट् । ॐ हं सः अव्यक्तात्मने अस्त्राय फट् । ॐ ब्रह्म भूर्भुवः स्वरोमिति दिग्बन्धः। अथ ध्यानं । हंसाभ्यां परिवृत्तपत्रकमलैर्दिव्यैर्जगत्कारणैर्विश्वोत्कीर्णमनेकदेहनिलयैः स्वच्छन्दमात्मेच्छया ॥ तद्योतं पदशांभवं तु चरणं दीपांकुरग्राहिणं । प्रत्यक्षाक्षरविग्रहं गुरुपदं ध्यायेद्विभुं शाश्वतम् ॥ १ ॥ मम चतुर्विधपुरुषार्थसिद्धचर्थे जपे विनियोगः ॥ सूत उवाच । कैलासशिखरे रम्ये भक्तिसंधान-नायकम् । प्रणम्य पार्वती भक्त्या शंकरं पर्यपृच्छत ॥ १ ॥ श्रीदेव्युवाच ॐ नमो देवदेवेश परात्पर जगद्गुरो । सदाशिव महादेव गुरुदीक्षां प्रदेहि मे ॥ २ ॥ केन मार्गेण भो स्वामिन् देही ब्रह्ममयो भवेत् । त्वं कृपां कुरु मे स्वामिन् नमामि चरणौ तव ॥ ३ ॥ ईश्वर उवाच । ममरूपासि देवि त्वं, त्वत्प्रीत्यर्थं वदाम्यहम् । लोकोपकारकः प्रश्नो न केनापि कृतः पुरा ॥ ४ ॥ दुर्लभं त्रिषु लोकेषु तच्छृणुष्व वदाम्यहम् । गुरुं विना ब्रह्म नान्यत् सत्यं सत्यं वरानने ॥ ५ ॥ वेदशास्त्रपुराणानि इतिहासादिकानि च । मंत्रयंत्रादिविद्याश्च स्मृतिरुच्चाटनादिकम् ॥ ६ ॥ शैवशाक्तागमादीनि अन्यानि विविधानि च । अपभ्रंशकराणीह जीवानां भ्रांतचेतसाम् ॥ ७ ॥ यज्ञो व्रतं तपो दानं जपस्तीर्थं तथैव च । गुरुतत्त्वमविज्ञाय मूढास्ते चरते जनाः ॥ ८ ॥ गुरुबुद्धचात्मनो नान्यत् सत्यं सत्यं न संशयः । तल्लाभार्थं प्रयत्नस्तु, कर्तव्यो हि मनीषिभिः ॥ ९ ॥ गूढविद्या जगन्माया देहे चाज्ञानसंभवा । उदयः स्वप्रकाशेन गुरुशब्देन कथ्यते ॥ १० ॥ सर्वपापविशुद्धात्मा श्रीगुरोः पादसेवनात् । देही ब्रह्म भवेद्यस्मात् तत्कृपार्थं वदामि ते ॥ ११ ॥ गुरुपादांबुजं स्मृत्वा जलं शिरसि धारयेत् । सर्वतीर्थावगाहस्य संप्राप्नोति फलं नरः ॥ १२ ॥ शोषणं पापपङ्कस्य दीपनं ज्ञानतेजसाम् । गुरुपादोदकं सम्यक्

संसारार्णवतारकम् ॥ १३ ॥ अज्ञानमूलहरणं जन्मकर्मनिवारणं । ज्ञान-वैराग्यसिद्धयर्थं, गुरुपादोदकं पिबेत् ॥ १४ ॥ गुरोः पादोदकं पीत्वा गुरोरुच्छिष्टभोजनम् । गुरुमूर्तेः सदा ध्यानं गुरुमंत्रं सदा जपेत् ॥ १५ ॥ काशीक्षेत्रं तन्निवासो जान्हवी चरणोदकम् । गुरुर्विश्वेश्वरः साक्षात् तारकं ब्रह्म निश्चितम् ॥ १६ ॥ गुरोः पादोदकं यत्तु गयाऽसौ सोऽक्षयो वटः । तीर्थराजः प्रयागश्च गुरुमूर्ते नमो नमः ॥ १७ ॥ गुरुमूर्ति स्मरेन्नित्यं गुरुनाम सदा जपेत् । गुरोराज्ञां प्रकुर्वीत गुरोरन्यन्न भावयेत् ॥ १८ ॥ गुरुवक्त्रस्थितं ब्रह्म प्राप्यते तत्प्रसादतः । गुरोर्ध्यानं सदा कुर्यात् कुलस्त्री स्वपतेर्यथा ॥ १९ ॥ स्वाश्रमं च स्वजातिं च स्वकीर्तिपुष्टिवर्धनम् । एतत्सर्वं परित्यज्य गुरोरन्यन्न भावयेत् ॥ २० ॥ अनन्याश्चिन्तयन्तो मां सुलभं परमं पदम् । तस्मात्सर्वप्रयत्नेन गुरोराराधनं कुरु ॥ २१ ॥ त्रैलोक्य-स्फुटवक्तारो देवाद्यसुरपन्नगाः । गुरुवक्त्रस्थिता विद्या गुरुभक्त्या तु लभ्यते ॥ २२ ॥ गुकारस्त्वन्धकारश्च रुकारस्तेज उच्यते । अज्ञानग्रासकं ब्रह्म गुरुरेव न संशयः ॥ २३ ॥ गुकारः प्रथमो वर्णो, मायादिगुणभासकः । रुकारो द्वितीयो ब्रह्म मायाभ्रान्तिविनाशनम् ॥ २४ ॥ एवं गुरुपदं श्रेष्ठं देवानामपि दुर्लभम् । हाहाहूहूगणैश्चैव गन्धर्वैश्च प्रपूज्यते ॥ २५ ॥ ध्रुवं तेषां च सर्वेषां नास्ति तत्त्वं गुरोः परम् । आसनं शयनं वस्त्रं भूषणं वाहनादिकम् ॥ २६ ॥ साधकेन प्रदातव्यं गुरुसंतोषकारकम् । गुरोराराधनं कार्यं स्वजीवित्वं निवेदयेत् ॥ २७ ॥ कर्मणा मनसा वाचा नित्यमाराधयेद्गुरुम् । दीर्घदण्डं नमस्कृत्य निर्लज्जो गुरुसन्निधौ ॥ २८ ॥ शरीरमिन्द्रियं प्राणं सद्गुरुभ्यो निवेदयेत् । आत्मदारादिकं सर्वं सद्गुरुभ्यो निवेदयेत् ॥ २९ ॥ कृमिकीटभस्मविष्ठा–दुर्गन्धिमलमूत्रकम् । श्लेष्म–रक्तं त्वचा मांसं वंचयेन्न वरानने ॥ ३० ॥ संसारवृक्षमारूढाः पतन्तो नरकार्णवे । येन चैवोद्धृताः सर्वे तस्मै श्रीगुरवे नमः ॥ ३१ ॥ गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः । गुरुरेव परब्रह्म तस्मै श्रीगुरवे नमः ॥ ३२ ॥ हेतवे जगतामेव संसारार्णवसेतवे । प्रभवे सर्वविद्यानां शंभवे गुरवे नमः ॥ ३३ ॥ अज्ञानतिमिरांधस्य ज्ञानांजन-शलाकया । चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ ३४ ॥ त्वं पिता त्वं च मे माता त्वं बंधुस्त्वं च देवता । संसारप्रतिबोधार्थं तस्मै श्रीगुरवे नमः ॥ ३५ ॥ यत्सत्येन जगत्सत्यं यत्प्रकाशेन भाति तत् । यदानंदेन नंदंति तस्मै श्रीगुरवे नमः ॥ ३६ ॥ यस्य स्थित्या सत्यमिदं, यद्भाति भानुरूपतः । प्रियं पुत्रादि यत्प्रीत्या तस्मै श्रीगुरवे नमः ॥ ३७ ॥ येन चेतयते हीदं चित्तं

चेतयते न यम् । जाग्रत्स्वप्नसुषुप्त्यादि तस्मै श्रीगुरवे नमः ॥ ३८ ॥ यस्य ज्ञानादिदं विश्वं न दृश्यं भिन्नभेदतः । सदेकरूपरूपाय तस्मै श्रीगुरवे नमः ॥ ३९ ॥ 'यस्यामतं तस्य मतं मतं यस्य न वेद सः ।' अनन्यभावभावाय तस्मै श्रीगुरवे नमः ॥ ४० ॥ यस्य कारणरूपस्य कार्यरूपेण भाति यत् । कार्यकारणरूपाय तस्मै श्रीगुरवे नमः ॥ ४१ ॥ नानारूपमिदं सर्वं न केनाप्यस्ति भिन्नता । कार्यकारणता चैव तस्मै श्रीगुरवे नमः ॥ ४२ ॥ यदंघ्रिकमलद्वंद्वं द्वंद्वतापनिवारकं । तारकं सर्वदाऽऽपद्भ्यः श्रीगुरुं प्रणमाम्यहम् ॥ ४३ ॥ शिवे क्रुद्धे गुरुस्त्राता गुरौ क्रुद्धे शिवो न हि । तस्मात्सर्वप्रयत्नेन श्रीगुरुं शरणं व्रजेत् ॥ ४४ ॥ वन्दे गुरुपदद्वंद्वं वाङ्मनश्चित्तगोचरं । श्वेतरक्तप्रभाभिन्नं शिवशक्त्यात्मकं परम् ॥ ४५ ॥ गुकारं च गुणातीतं रुकारं रूपवर्जितम् । गुणातीतस्वरूपं च यो दद्यात्स गुरुः स्मृतः ॥ ४६ ॥ अ-त्रिनेत्रः सर्वसाक्षि अ-चतुर्बाहुरच्युतः । अ-चतुर्वदनो ब्रह्मा श्रीगुरुः कथितः प्रिये ॥ ४७ ॥ अयं मयाञ्जलिर्बद्धो दयासागरवृद्धये । यदनुग्रहतो जन्तुश्चित्रसंसारमुक्तिभाक् ॥ ४८ ॥ श्रीगुरोः परमं रूपं विवेकचक्षुषोऽमृतम् । मन्दभाग्या न पश्यन्ति अन्धाः सूर्योदयं यथा ॥ ४९ ॥ श्रीनाथचरणद्वंद्वं यस्यां दिशि विराजते । तस्यै दिशे नमस्कुर्याद्भक्त्या प्रतिदिनं प्रिये ॥ ५० ॥ तस्यै दिशे सततमञ्जलिरेष आर्ये प्रक्षिप्यते मुखरितो मधुपैर्बुधैश्च । जागर्ति यत्र भगवान् गुरुचक्रवर्ती । विश्वोदयप्रलयनाटकनित्यसाक्षी ॥ ५१ ॥ श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयं भैरवं। सिद्धौघं बटुकत्रयं पदयुगं दूतीत्रयं शांभवम् । वीरेशाष्टचतुष्कषष्टिनवकं वीरावलीपञ्चकं । श्रीमन्मालिनिमंत्रराजसहितं वन्दे गुरोर्मण्डलम् ॥ ५२ ॥ अभ्यस्तैः सकलैः सुदीर्घमनिलैर्व्याधिप्रदैर्दुष्करैः । प्राणायामशतैरनेककरणैर्दुःखात्मकैर्दुर्जयैः । यस्मिन्नभ्युदिते विनश्यति बली वायुः स्वयं तत्क्षणात् । प्राप्तुं तत्सहजं स्वभावमनिशं सेवध्वमेकं गुरुम् ॥ ५३ ॥ स्वदेशिकस्यैव शरीरचिन्तनं, भवेदनन्तस्य शिवस्य चिन्तनम् । स्वदेशिकस्यैव च नामकीर्तनं, भवेदनन्तस्य शिवस्य कीर्तनम् ॥ ५४ ॥ यत्पादरेणुकणिका कापि संसारवारिधेः । सेतुबधायते नाथं देशिकं तमुपास्महे ॥ ५५ ॥ यस्मादनुग्रहं लब्ध्वा महदज्ञानमुत्सृजेत् । तस्मै श्रीदेशिकेंद्राय नमश्चाभीष्टसिद्धये ॥ ५६ ॥ पादाब्जं सर्वसंसार-दावानल-विनाशकं । ब्रह्मरंध्रे सिताम्भोजमध्यस्थं चन्द्रमण्डले ॥५७॥ अकठादित्रिरेखाब्जे—सहस्रदल–मण्डले । हंसपार्श्वत्रिकोणे च स्मरेत्तन्मध्यगं गुरुम् ॥ ५८ ॥ सकलभुवनसृष्टिः कल्पिताशेषपुष्टि–। निखिलनिगमदृष्टिः संपदां व्यर्थदृष्टि । अवगुणपरिमार्ष्टिस्तत्पदार्थैकदृष्टि– । र्भवगुणपरमेष्टिर्मोक्षमार्गैकदृष्टिः ॥५९॥ सफल-

भुवनरंगस्थापनास्तंभयष्टिः। सकरुणरसवृष्टिस्तत्त्वमालासमष्टिः। सकलसमय-सृष्टिः सच्चिदानंददृष्टिर्निवसतु मयि नित्यं श्रीगुरोर्दिव्यदृष्टिः ॥ ६० ॥ अग्निशुद्धसमंतात ज्वालापरिचकाधिया। मंत्रराजमिमं मन्येऽहर्निशं पातु मृत्युतः ॥ ६१ ॥ तदेजति तन्नैजति तद्दूरे तत्समीपके। तदन्तरस्य सर्वस्य तद्‌ सर्वस्य बाह्यतः ॥६२॥ अजोऽहमजरोऽहं च अनादिनिधनः स्वयम्। अविकारश्चिदानन्द अणीयान्महतो महान् ॥ ६३ ॥ अपूर्वाणां परं नित्यं स्वयंज्योतिर्निरामयम्। विरजं परमाकाशं ध्रुवमानन्दमव्ययम् ॥ ६४ ॥ श्रुतिः प्रत्यक्षमैतिह्यम-नुमानश्चतुष्टयम्। यस्य चात्मतपो वेद देशिकं च सदा स्मरन् ॥ ६५ ॥ मननं यद्भवं कार्यं तद्वदामि महामते। साधुत्वं च मया दृष्ट्वा त्वयि तिष्ठति सांप्रतम् ॥ ६६ ॥ अखण्डमण्डलाकारं व्याप्तं येन चराचरं। तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥ ६७ ॥ सर्वश्रुतिशिरोरत्न–विराजितपदांबुजः। वेदान्ताम्बुजसूर्यो यस्तस्मै श्री० ॥ ६८ ॥ यस्य स्मरणमात्रेण ज्ञानमुत्पद्यते स्वयम्। य एव सर्वसंप्राप्तिस्तस्मै श्रीगुरवे नमः ॥ ६९ ॥ चैतन्यं शाश्वतं शान्तं व्योमातीतं निरंजनम्। नादबिंदुकलातीतं तस्मै श्रीगुरवे नमः ॥ ७० ॥ स्थावरं जंगमं चैव तथा चैव चराचरम्। व्याप्तं येन जगत्सर्वं तस्मै श्रीगुरवे नमः ॥ ७१ ॥ ज्ञानशक्तिसमारूढस्तत्त्वमालाविभूषितः। भुक्तिमुक्तिप्रदाताय तस्मै श्रीगुरवे नमः ॥ ७२ ॥ अनेकजन्मसंप्राप्त–सर्वकर्मविदाहिने। स्वात्मज्ञान-प्रभावेण तस्मै श्रीगुरवे नमः ॥ ७३ ॥ न गुरोरधिकं तत्त्वं न गुरोरधिकं तपः। तत्त्वं ज्ञानात्परं नास्ति तस्मै श्रीगुरवे नमः ॥ ७४ ॥ मन्नाथः श्रीजग-न्नाथो मद्गुरुस्त्रिजगद्गुरुः। ममात्मा सर्वभूतात्मा तस्मै श्रीगुरवे नमः ॥ ७५ ॥ ध्यानमूलं गुरोर्मूर्तिः पूजामूलं गुरोः पदम्। मंत्रमूलं गुरोर्वाक्यं मोक्षमूलं गुरोः कृपा ॥ ७६ ॥ गुरुरादिरनादिश्च गुरुः परमदैवतम्। गुरोः परतरं नास्ति तस्मै श्रीगुरवे नमः ॥ ७७ ॥ सप्तसागरपर्यन्त–तीर्थस्नानादिकं फलम्। गुरोरंघ्रिपयोबिंदुसहस्रांशे न दुर्लभम् ॥ ७८ ॥ हरौ रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन। तस्मात्सर्वप्रयत्नेन श्रीगुरुं शरणं व्रजेत् ॥ ७९ ॥ गुरुरेव जगत्सर्वं ब्रह्मविष्णुशिवात्मकम्। गुरोः परतरं नास्ति तस्मात्संपूजयेद् गुरुम् ॥ ८० ॥ ज्ञानं विज्ञानसहितं लभ्यते गुरुभक्तितः। गुरोः परतरं नास्ति ध्येयोऽसौ गुरुमार्गिभिः ॥ ८१ ॥ यस्मात्परतरं नास्ति नेति नेतीति वै श्रुतिः। मनसा वचसा चैव नित्यमाराधयेद् गुरुम् ॥ ८२ ॥ गुरोः कृपाप्रसादेन ब्रह्म-विष्णुसदाशिवाः। समर्थाः प्रभवादौ च कैवल्यं गुरुसेवया ॥ ८३ ॥ देवकिन्नर-गंधर्वाः पितरो यक्षचारणाः। मुनयोऽपि न जानन्ति गुरुशुश्रूषणे विधिम् ॥८४॥

विरजस्थानकः श्रेष्ठः सर्वो नारायणः प्रभुः ।। कर्मज्ञः कर्मनिरतो नृसिंहो वामनोऽच्युतः ।।९।।कविः काव्यो जगन्नाथो जगन्मूर्तिरनामयः।। मत्स्यः कूर्मो वराहश्च हरि कृष्णो महास्मयः ।।१०।। रामो रामो रघुपतिर्बुद्धः कल्की जनार्दनः ।। गोविंदो माधवो विष्णुः श्रीधरो देवनायकः ।। ११ ।। त्रिविक्रमः केशवश्च वासुदेवो महेश्वरः ।। संकर्षणः पद्मनाभो दामोदरपरः शुचिः।।१२।। श्रीशैलवनचारी च भार्गवस्थानकोविदः ।। अहो वलनिवासी च स्वामी पुष्करणीप्रियः ।।१३।। कुंभकोणनिवासी च कंचिवासी रसेश्वरः ।। रसानुभोक्ता सिद्धेशः सिद्धिमान् सिद्धवत्सलः ।। १४ ।। सिद्धरूपः सिद्धविधिः सिद्धचारप्रवर्तकः ।। रसाहारो विषाहारो गंधकादि प्रसेवकः ।। १५ ।। योगी योगपरो राजा धृतिमान् मतिमान्सुखी ।। बुद्धिमान्नीतिमान् बालो ह्युन्मत्तो ज्ञानसागरः ।।१६।। योगिस्तुतो योगिचंद्रो योगिवंद्यो यतीश्वरः ।। योगादिमान् योगरूपो योगिशो योगिपूजितः ।।१७।। काष्ठायोगी दृढप्रज्ञो लंबिकायोगवान् दृढः।। खेचरश्च खगः पूषा रश्मिवान्भूतभावनः ।। १८ ।। ब्रह्मज्ञः सनकादिभ्यः श्रीपतिः कार्यसिद्धिमान् ।। स्पृष्टपृष्ठविहीनात्मा योगज्ञो योगमूर्तिमान् ।।१९।। मोक्षश्रीर्मोक्षदो मोक्षी मोक्षरूपो विशेषवान् ।। सुखप्रदः सुखः सौख्यः सुखरूपः सुखात्मकः ।। २० ।। रात्रिरूपो दिवारूपः संध्यात्मा कालरूपकः ।। कालः कालविवर्णश्च बालः प्रभुरतुल्यकः ।। २१ ।। सहस्रशीर्षा पुरुषो वेदात्मा वेदपारगः ।। सहस्रचरणोऽनंतः-सहस्त्राक्षो जितेंद्रियः ।।२२।। स्थूलसूक्ष्मो निराकारो निर्मोहो भक्तमोहवान् ।। महीयान्परमाणुश्च जितक्रोधो भयापहः ।। २३ ।। योगानंदप्रदाता च योगो योगविशारदः।। नित्यो नित्यात्मवान् योगी नित्यापूर्णो निरामयः ।।२४।। दत्तात्रेयो देवदत्तो योगी परमभास्करः।। अवधू तः सर्वनाथः सत्कर्ता पुरुषोत्तमः ।।२५।। ज्ञानी लोकविभुःकांतः शीतोष्णसम बुद्धकः ।। विद्वेषी जनसंहर्ता धर्मबुद्धिर्विचक्षणः ।। २६ ।। नित्यतृप्तो विशोकश्च द्विभुजः कामरूपकः ।। कल्याणोऽभिजनो धीरो विशिष्टः सुविचक्षणः ।। २७।। श्रीमद्भगवतार्थज्ञो रामायणविशेषवान् ।। अष्टादशपुराणज्ञो षड्दर्शनविजृंभकः।।२८।।निर्विकल्पः सुरश्रेष्ठो ह्युत्तमो लोकपूजितः । गुणातीतः पूर्णगुणो ब्रह्मण्यो द्विजसंवृतः ।।२९।। दिगंबरो महाज्ञेयो विश्वात्मात्मपरायणः वेदांतश्रवणो वेदी कालावान्निष्कलत्रवान् ।। ३० ।। मिताभाष्यमितभाषी सौम्यो रामो जयः शिवः ।। सर्वजित् सर्वतोभद्रो जयकांक्षी सुखावहः ।।३१।। प्रत्यर्थिकीर्तिसंहर्ता मंदरार्चितपादुकः ।। वैकुंठवासी देवेशो विरजास्नातमानसः ।। ३२ ।। श्रीमरुनिलयो योगी बालार्कप्रभकांतिमान् ।। रक्तांगः श्यामलांगश्च बहुवेषो बहुप्रियः ।।३३।। महालक्ष्म्यन्नपूर्णेशः स्वधाकारो यतीश्वरः । स्वर्णरूपः स्वर्णदायी गुलिकायंत्रकोविदः ।। ३४ ।। अनीतमूलिकायंत्रो भक्ताभीष्टप्रदो महान् ।। शांताकारो महामायो माहुरस्थो जगन्मयः ।।३५।। बद्धाशनश्च सूक्ष्मांशी मिताहारो निरुद्यमः।। ध्यानात्मा ध्यानयोगात्मा ध्यानस्थो ध्यानसत्प्रियः ।।३६।। सत्यध्यानः सत्यमयः सत्यरूपो निजाकृतिः ।। त्रिलोकगुरुरेकात्मा भस्मोध्दूलितविग्रहः ।।३७।। प्रियाप्रियसमः पूर्णो लाभालाभसमप्रियः ।।

सुखदु:खसमो र्‍हीमान् हिताहितसमः पराः ॥ ३८ ॥ गुरुर्ब्रह्मा च विष्णुश्च महाविष्णु सनातनः ॥ सदाशिवो महेंद्रश्च गोविंदो मधुसूदनः ॥३९॥ कर्ता कारयिता रुद्रः सर्वचारी तु याचकः ॥ संपत्प्रदो वृष्टिरूपो मेघरूपस्तपःप्रियः ॥ ४० ॥ तपोमूर्तिस्तपाराशिस्तपस्वी च तपोधनः ॥ तपोमयस्तपः शुद्धो जनको विश्वसृग्विधिः ॥४१॥ तपःसिद्धस्तपः साध्यस्तपः कर्ता तपःक्रतुः ॥ तपःशमस्तपः कीर्तिस्तपोदारस्तपोत्ययः ॥४२॥ तपोरेतस्तपोज्योतिस्तपात्मा चात्रिनंदनः ॥ निष्कल्मषो निष्कपटो निर्विघ्नो धर्मभीरुकः ॥ ४३ ॥ वैद्युतरतारकः कर्मवेदिको ब्राह्मणो यतिः ॥ नक्षत्रतेजा दीप्तात्मा परिशुद्धो विमत्सरः ॥ ४४ ॥ जटी कृष्णाजिनपदो व्याघ्रचर्मधरो वशी ॥ जितेंद्रियश्चीरवासाः शुक्लवस्त्रांबरो हरिः ॥४५॥ चंद्रानुजश्चंद्रमुखः शुकयोगी वरप्रदः ॥ दिव्य योगी पंचतपो मासर्तुवत्सराननः ॥ ४६ ॥ भूतज्ञो वर्तमानज्ञ एवंज्ञो धर्मवत्सलः ॥ प्रजाहितः सर्वहित अनिंद्यो लोकवंदितः ॥ ४७ ॥ आकुंचयोगसंबद्धमलमूत्ररसादिकः ॥ कनकीभूतमलवान् राजयोगविचक्षणः ॥४८॥ शकटादिविशेषज्ञो लंबिकानी तितत्परः ॥ प्रपंचरूपी बलवान् एककौपीनवस्त्रकः ॥ ४९ ॥ दिगंबरः सोत्तरीयः सजटः सकमंडलुः । निर्दंडश्चासिदंडश्च स्त्रीवेषः पुरुषाकृतिः ॥ ५० ॥ तुलसीकाष्ठमाली च रौद्रः स्फटिमालिकः ॥ निमीलिकः शुद्धतरः स्वेच्छा अमरवान् परः ॥५१॥ ऊर्ध्वपुंड्रस्त्रिपुंड्रांको द्वंद्वहीनः सुनिर्मलः ॥ निर्जटः सुजटो हेयो भस्मशायी सुभोगवान् ॥५२॥ मूत्रस्पर्शो मलस्पर्शो जातिहीनः सुजातिकः ॥ अभक्ष्याभक्षो निर्भक्षो जगद्वंदितदेहवान् ॥ ५३ ॥ भूषणो दूषणसमः कालाकालो दयानिधिः ॥ बालप्रियो बालरुचिर्बालवानतिबालकः ॥५४॥ बालक्रीडो बालरतो बालसंघवृतो बली ॥ बाललीलाविनोदश्च कर्णाकर्षणकारकः ॥ ५५ ॥ क्रयानीतवणिक्पण्यो गुडसूपादिभक्षकः ॥ बालग्रहीतहस्तो मुष्टियुद्धकरश्चलः ॥५६॥ आदृश्यो दृश्यमानश्च द्वंद्वयुद्धप्रवर्तकः ॥ पलायमानो बालाढ्यो बालहासः सुसंगतः ॥ ५७ ॥ प्रत्यागतः पुनर्गच्छंश्चक्रवद्गमनाकुलः ॥ चोरवध्रृतसर्वस्वो अनतार्तिकदेहवान् ॥ ५८ ॥ महसन्प्रदन्दत्तो द्विव्यमंगलविग्रहः ॥ मायाबालश्च मायावी पूर्णलीलो मुनीश्वरः ॥ ५९ ॥ माहुरेशो विशुद्धात्मा यशस्वी कीर्तिमान् युवा ॥ सविकल्पः सच्चिदाभो गुणवान् सौम्यभावनः ॥ ६० ॥ पिनाकी शशिमौली च वासुदेवो दिवस्पतिः ॥ सुशिराः सूर्यतेजश्च श्रीगंभीरोष्ठउन्नति ॥ ६१ ॥ दशपद्मात्रिशीर्षश्च त्रिभिर्व्याप्तो द्विशुक्लवान् ॥ त्रिसमश्च त्रितात्मश्च त्रिलोकश्च त्र्यांचकः ॥६२॥ चतुर्द्वादशयवनस्त्रीकामो हंसवाहनः॥ चतुष्कलश्चतुर्दंष्ट्रो गतिः शंभुः प्रियाननः ॥६३॥ चतुर्मतिर्महादंष्ट्रो वेदांगी चतुराननः ॥ पंचशुद्धो महायोगी महाद्वादशवानकः ॥६४॥ चतुर्मुखो नरतनुरजेयश्चाष्टवशवान् ॥ चतुर्दंसमद्वंद्वो मुकरांको दशांशवान् ॥६५॥ वृषांको वृषभारूढश्चंद्रतेजाः सुदर्शनः ॥ सामप्रियो महेशानश्चिदाकारोः नरोत्तमः ॥६६॥ दयावान् करुणापूर्णो महेंद्रो माहुरेश्वरः ॥ वीरासनसमासीनो रामो रामपरायणः ॥ ६७ ॥ इंद्रो वह्निर्यमः कालो निर्ऋतिर्वरुणो यमः ॥ वायुश्च

रुद्रश्चशानो लोकपालो महायशाः ॥६८॥ यक्षगंधर्वनागाश्च किन्नरः शुद्धरूपकः विद्याधरश्चाद्दिपतिश्चारणः पन्नगेश्वरः ॥ ६९ ॥ चंडिकेशः प्रचंडश्च घंटानादरतः प्रियः ॥ वीणाध्वनिर्विनतेयो नारदस्तुंवरुर्हरः ॥७०॥ वीणाप्रचंडसौंदर्यो राजीवाक्षश्च मन्मथः । चंद्रो दिवाकरो गोपः केसरी सोमसोदरः ॥७१॥ सनकः शुकयोगी च नंदी षण्मुखरागकः ॥ गणेशो विघ्नराजश्च चंद्राभो विजयो जयः ॥७२॥ अतीतकालचक्रश्च तामसः कालदंडवान् । विष्णुश्चक्रः त्रिशूलेंद्रो ब्रह्मदंडो विरुद्धकः ॥७३॥ ब्रह्मारुद्ररूपः सत्येंद्रः कीर्तिमान्गोपतिर्भवः ॥ वसिष्ठो वामदेवश्च जावाली कण्वरूपकः ॥७४॥ संवर्तरूपो मौद्‌गल्यो मार्कंडेयश्च काश्यपः॥ निजडो गार्ग्यरूपी च विपनाथो महोदयः॥७५॥ त्वष्टा निशाकरः कर्मकाश्यपश्च निरूपवान् ॥ जमदग्निः सर्वरूपः सर्वनादो यतीश्वरः ॥७६॥ अश्वरूपी वैद्यपतिर्गरकंठोऽधिकार्चितः ॥ चिंतामणिः कल्पवृक्षो रत्नाद्रिरुदधिप्रियः ॥ ७७ ॥ महामंडूकरूपी च कालाग्निसमविग्रहः ॥ आधारशक्तिरूपी च कूर्मः पंचाग्निरूपकः ॥७८॥ क्षीरार्णवो महारूपी वराहश्च धृतावनिः ॥ ऐरावतो जनः पद्मो वामनः कुमुदात्मवान् ॥ ७९ ॥ पुंडरीकः पुष्पदंतो मेघच्छन्नोऽभ्रचारकः॥ सीतोत्पलाभोद्युतिमान् दृढोरस्कः सुरार्चितः ॥८०॥ पद्मनाभः सुनाभश्च दशशीर्षः शतोदरः ॥ अवाङ्मुखो पंचवक्त्रो रक्षाख्यात्मा द्विरूपकः॥८१॥ स्वर्णमंडलसंचारी वेदिस्थः सर्वपूजितः ॥ स्वप्रसन्नः प्रसन्नात्मा स्वभक्ताभिमुखो मृदुः ॥८२॥ आवाहितः संनिहितो वरदो ज्ञानिषत्स्थितः ॥ शालिग्रामात्मको ध्यातो रत्नसिंहासनस्थितः ॥ ८३ ॥ अर्घ्यप्रियः पाद्यतुष्टश्चाचम्यार्चितपादुकः ॥ पंचामृतः स्नानविधिः शुद्धोदकसुसंचितः ॥ ८४ ॥ गंधाक्षतसुसंप्रीतः पुष्पालंकारभूषणः ॥ अंगपूजाप्रियःसर्वोमहाकीर्तिर्महाभुजः ॥ ८५ ॥ नामपूजाविशेषज्ञः सर्वनामस्वरूपकः ॥ धूपितो दिव्यधूपात्मा दीपितो बहुदीपवान् ॥८६॥ बहुनैवेद्यसंहृष्टो नीरांजनविराजितः ॥ सर्वांतिरंजितानंदः सौख्यवान् धवलार्जुनः ॥ ८७ ॥ विरागो निर्विरागश्च यज्ञाचांगो विभूतिकः ॥ उन्मत्तो भ्रांतचित्तश्च शुभचित्तः शुभाहुतिः ॥ ८८ ॥ सुरेरिणो लघिष्ठश्च वंहिष्ठो बहुदायकः ॥ महिष्ठः सुमहौजाश्च बलिष्ठः सुप्रतिष्ठितः ॥८९॥ काशीगंगांबुमज्जश्च कुलश्रीमंत्रजापकः ॥ चिकुरान्वितभालश्च सर्वांगालिप्तभूतिकः ॥ ९० ॥ अनादिनिधनो ज्योतिर्भार्गवाग्रः सनातनः ॥ तापत्रयोपशमनो मानवासो महोदयः ॥९१॥ ज्येष्ठः श्रेष्ठो महारौद्रः कालमूर्तिः सुनिश्चयः ॥ ऊर्ध्वः सपूर्ध्वलिंगश्च हिरण्यो हेमलिंगवान् ॥९२॥ सुवर्णः स्वर्णलिंगश्च दिव्यमूर्तिर्दिवस्पतिः ॥ दिव्यलिंगो भवो भव्यः सर्वलिंगस्तु सर्वकः ॥९३॥शिवलिंगः शिवो मायोज्वलस्तूज्वललिंगवान्॥आत्मा चैवात्मलिंगश्च परमो लिंगपारगः ॥९४॥सोमः सूर्यः सर्वलिंगः पाणियंत्रपवित्रवान् ॥ सद्योजातो तपोरूपो भवोद्भव अनीश्वरः ॥९५॥ तत्सवितूपमविता वरेण्यश्च प्रचोदयात् ॥ दूर दृष्टिर्दूरगतो दूरश्रवणतर्पितः ॥९६॥ योगपीठस्थितो विद्वान् नमस्कारितरासभः ॥ नमस्कृतशुनश्चापि वज्रकष्टयातिभीषणः ॥९७॥ ज्वलन्मुखः प्रतिवीणा सखड्गो द्रावितप्रजः॥ पशुघ्नश्च रसोन्मत्तो रसोर्ध्वमुखरं-

जितः ॥९८॥ रसप्रियो रसात्मा च रसरूपी रसेश्वरः ॥ रसाधिदैवतो भौमो रसांगो रसभावनः॥९९॥रसोन्मयो रसकरो रसेंद्रो रसपूजकः॥रससिद्धः सिद्धरसो रसद्रव्यो रसोन्मुखः ॥१००॥ रसांकितो रसापूर्णो रसदो रसिकोरसि ॥ गंधकादस्तालकादो गौरःस्फटिकसेवनः ॥१॥ कार्यसिद्धः कार्यरुचिर्बहुकार्यो न कार्यवान् ॥ अभेदी जनकर्ता च शंखचक्रगदाधरः ॥२॥कृष्णाजिनकिरीटी च श्री कृष्णाजिनकंचुकः मृगयायी मृगेंद्रश्च गजरूपी गजेश्वरः॥३॥ दृढव्रतः सत्यवादी कृतज्ञो बलवान्बलः ॥ गुणवान् कार्यवान् दांतः कृतशोभो दुरासदः ॥ ४ ॥ सुकालो भूतनिहितः समर्थब्रांडनायकः ॥ संपूर्णदृष्टिरक्षुब्धो जनैकप्रियदर्शनः ॥ ५ ॥ नियतात्मा पद्मधरो ब्रह्मवांश्चानसूयकः ॥ उंच्छवृत्तिरनीशश्च राजभोगी सुमालिकः ॥ ६ ॥ सुकुमारो जराहीनो चोरघ्नो मंजुलक्षणः ॥ सुपदः स्वंगुलीकश्च सुजघः शुभजानुकः ॥ ७ ॥ शुभोरुः शुभलिंगश्च सुनाभो जघनोत्तमः ॥ सुपार्श्वः सुस्तनो नीलः सुवक्षश्च सुजत्रुकः ॥८॥ नीलग्रीवो महास्कंधः सुभुजो दिव्यजंघकः ॥ सुहस्तरेखो लक्ष्मीवान् दीर्घपृष्ठो यतिश्चलः॥७॥बिंबोष्ठः शुभदंतश्च विद्युज्जिव्हः सुतालकः॥ दीर्घनासः सुताम्राक्षः सुकपोलः सुणर्ककः ॥११०॥ उन्मीलितोन्मीलितश्च विशालाक्षश्च शुभ्रकः ॥ शुभमध्यः सुभालश्च सुशिरानीलरोमकः ॥११॥ विशिष्टग्रामणिस्कंधः शिखिवर्णो विभावसुः ॥ कैलासेशो विचित्रज्ञो वैकुंठेंद्रो विचित्रवान् ॥१२॥ मनसेंद्रश्चनवालो महेंद्रो मंदाराधिपः । मलयो विंध्यरूपश्च हिमवान् मेरूरूपकः ॥१३॥ सुषेणो नव्यरूपात्मा मैनाको गंधमादनः ॥ सिंहलश्च वेदाद्रिः श्रीशैलः क्रकचात्मकः ॥ १४ ॥ नानाचलश्चित्रकूटो दुर्वासाः पर्वतात्मजः ॥ यमुनाकृष्णवेणीशो भद्रेशो गौतमीपतिः ॥१५॥ गोदावरीशो गंगात्मा शोणकः कौशिकीपतिः ॥ नर्मदेशस्तु कावेरीताम्रपर्णीश्वरो जटी ॥१६॥ सग्द्रूपा नदात्मा च समुद्रः सरिदीश्वरः ॥ ऱ्हादिनीशः पावनीशो नलिनीशः सुचक्षुवान्॥१७॥ सितानदीपतिः सिंधूरेवेशो मुरलीपतिः ॥ लवणेक्षुः क्षीरनिधिः सुराब्धिः सर्पिरंबुधि ॥१८॥ दयाब्धिशुद्धजलधिस्तत्वरोपो धनाधिपः ॥ भूपालमधुरागज्ञो मालवीरागकोविदः ॥१९॥ पौंड्रक्रियाज्ञः श्रीरागो नानारागार्ण वांतकः ॥ वेदादिरूपो ऱ्हीरूपो ब्लंरूपः क्लींविकारकः॥१२०॥ ब्लुंमयः क्लीमयोः मल्योः हुंमयः क्रोंमयो मदः। श्रीमयो लुंग्मयो गांगो घंमयो खंमयः खगः ॥२१॥ खंमयो ज्ञंमयश्चां कर गोबीजांगो वीजजंमयः ॥ झंकरष्टंकरः ऐंगोडंकरी ठकरोऽणुकः॥२२॥तंकरस्थंरस्तुंगोद्रांमुद्रारूपकः सुदः॥दक्षो दंडी दानवघ्नो अमाविद्वंद्ववामदः ॥ २३ ॥ वंरूपो नंस्वरूपश्च पंकजाक्षश्च फंमयः ॥ महेंद्रो मधुभोक्ता च मंदरेतास्तु भंमयः ॥२४॥ रंमयो रिंकरो रंगो लंकरः पंमयः शरः ॥ शंकरः षण्मुखो हंसः शंकरः शंकरो क्षयः ॥ २५ ॥ ॐ मित्येकाक्षरात्मा च सर्वबीजस्वरूपकः ॥ श्रीकरः श्रीपदः श्रीयः श्रीनिधिः श्रीनिकेतनः ॥२६॥ पुरुषोत्तमः सुखी योगी दत्तात्रेयो हृदिप्रियः तत्संयुतः सदायोगी धीरतंत्रसुसाधकः॥२७॥पुरुषोत्तमो यतिश्रेष्ठो दत्तात्रेयःसखीत्ववान्॥ वसिष्ठवामदेवाभ्यां दत्तः पुरुष ईरितः ॥२८॥ यावत्तिष्ठते ह्यस्मिन् तावत्तिष्ठति तत्सुखी ॥

यः इदं शृणुयान्नित्यं ब्रह्मसायुज्यतां व्रजेत् ॥ २९ ॥ भुक्तिमुक्तिकरं तस्य नात्रकार्याविचारणा ॥ आयुष्मत्पुत्रपौत्रांश्च दत्तात्रेयः प्रदर्शयेत् ॥ १३० ॥ धन्यं यशस्यमायुष्यं पुत्रभाग्यविवर्धनं ॥ करोति लेखनादेव परार्थं वा न संशयः ॥ ३१ ॥ यः करोत्युपदेशं च नामदत्तसहस्रकं ॥ स च याति च सायुज्यं श्रीमान् श्रीमान् न संशयः ॥ ३२ ॥ पठणाच्छ्रवणाद्वापि सर्वान्कामानवाप्नुयात् ॥ खेचरत्वं कार्यसिद्धिं योगासिध्दिमवाप्नुयात् ॥३३॥ ब्रह्मराक्षसवेतालैः पिशाचैः कामिनीमुखैः ॥ पीडाकरैः सुखकरैर्ग्रहैर्दुष्टैर्न बाध्यते ॥ ३४ ॥ देवैः पिशाचैर्मुच्येत सकृदुच्चारणे न तु ॥ यस्मिन्देशे स्थितं चैतत्पुस्तकं दत्तनामकं ॥ ३५ ॥ पंच-योजनविस्तारं रक्षणं नात्र संशयः ॥ सर्वबीजसमायुक्तं स्तोत्रं नाम सहस्रकं ॥ ३६ ॥ सर्वमंत्रस्वरूपं च दत्तात्रेय स्वरूपकं ॥ एकवारं पठित्वा तु ताम्रपात्रे जलं स्पृशेत् ॥ ३७ ॥ पीत्वा चेत्सर्वरोगैश्च मुच्यते नात्र संशयः ॥ स्त्रीवश्यं पुरुषवश्यं राजवश्यं जयावहं ॥ ३८ ॥ संपत्प्रद मोक्षकरं पठेन्नित्यमतंद्रितः ॥ लीयतेऽस्मिन्प्रपंचार्थान् वैरिशोकादिकारितः ॥ ३९ ॥ पठणात्तु प्रसन्नोऽहं शंकराचार्य बुध्दिमान् ॥ भविष्यसि न संदेहः पठितः भातरेव माम् ॥ १४० ॥ उपदेक्षे सर्वयोगान् लंघिकादिबहून्वरान् ॥ दत्तात्रेयस्तु चेत्युक्त्वा स्वप्ने चांतरधीयत ॥ ४१ ॥ स्वप्नादुत्थाय चाचार्यः शंकरो विस्मयं गतः ॥ स्वप्नोपदेशितं स्तोत्रं दत्तात्रेयेन योगिना ॥ ४२ ॥ सहस्रनामकं दिव्यं पठित्वा योगवान्भवेत् ॥ ज्ञानयोगयतित्वं च पराकायप्रवेशनं ॥ ४३ ॥ बहुविद्याखेचरत्वं दीर्घायुस्तत्प्रसादतः ॥ तदारभ्य भुवि श्रेष्ठः प्रसिध्दश्चाभवद्यती ॥ १४४ ॥

इति श्रीशंकराचार्य स्वानावस्थायां दत्तात्रेयोपदेशितं सकलपुराण–
वेदोक्तप्रपंचार्थसारवत्स्तोत्रं संपूर्णम्–

## श्रीदत्तभावसुधारसस्तोत्रम्

दत्तात्रेयं परसुखमयं वेदगेयं ह्यमेयं ॥ योगिध्येयं हृतनिजभयं स्वीकृतानेककायम् ॥ दुष्टाऽगम्यं विततविजयं देवदैत्यर्षिवंद्यं । वंदे नित्यं विहितविनयं चाव्ययं भावगम्यम् ॥१॥ दत्तात्रेय नमोऽस्तु ते भगवते पापक्षयं कुर्वते । दारिद्र्यं हरते भयं शमयते कारुण्यमातन्वते ॥ भक्तानुद्धरते शिवं च ददते सत्कीर्तिमातन्वते । भूतान्द्रावयते वरं प्रददते श्रेयः पते सद्गते ॥२॥ एकं सौभाग्यजनकं तारकं लोकनायकम् । विशोकं त्रातभक्तं नमस्ये कामपूरकम् ॥ ३ ॥ नित्यं स्मरामि ते पादे हृतखेदे सुखप्रदे । प्रदेहि मे शुद्धभावं भावं यो वारयेद्द्रुतम् ॥ ४ ॥ समस्तसंपत्प्रदमार्तबंधुं समस्तकल्याणदमस्तबंधुं ॥ कारुण्यसिंधुं प्रणमामि दत्तं यः शोधयत्याशु मलीनचित्तम् ॥ ५ ॥ समस्तभूतांतरबाह्यवर्ती यश्चात्रिपुत्रो यतिचक्रवर्ती । सुकीर्तिसंव्याप्तदिगंतरालः स पातु मा निर्जितभक्तकालः ॥ ६ ॥

व्याध्याधिदारिद्र्यभयार्तिहर्ता स्वगुप्तयेऽनेकशरीरधर्ता । स्वदासभर्ता बहुधा विहर्ता कर्ताप्यकर्ता स्ववशोऽरिहर्ता ॥ ७ ॥ स चानसूयातनयोऽभवद्यो विष्णुः स्वयं भाविकरक्षणाय । गुणा यदीया न हि बुद्धिमद्भिर्गण्यंत आकल्पमपीह धात्रा ॥८॥ न यत्कटाक्षामृतवृष्टितोऽत्र विष्ठंति तापाः सकलाः परत्र । यः सद्गतिं संप्रददाति भूमा स मेंतरे तिष्ठतु दिव्यधामा ॥ ९ ॥ स त्वं प्रसीदात्रिसुताविहारिन् दिगंबर स्वीयमनोविहारिन् । दुष्टा लिपिर्या लिखितात्र धात्रा कार्या त्वया सातिशुभा विधात्रा ॥ १० ॥ सर्वमंगलसंयुक्त सर्वैश्वर्यसमन्वित । प्रसन्ने त्वयि सर्वेशे किं केषां दुर्लभं कुह ॥ ११ ॥ हार्दांधतिमिरं हंतुं शुद्धज्ञानप्रकाशक । त्वदंघ्रिनखमाणिक्यद्युतिरेवालमीश नः ॥ १२ ॥ स्वकृपार्द्रकटाक्षेण वीक्षसे चेत्सकृद्धि मां । भविष्यामि कृतार्थोऽत्र पात्रं चापि श्रियेस्तव ॥१३॥ क च मंदो वराकोऽहं क भवान्भगवान्प्रभुः । अथापि भवदावेद्य भाग्यवानास्मि ते दृशा ॥१४॥ विहितानि मया नाना पातकानि च यद्यपि । अथापि ते प्रसादेन पवित्रोऽहं न संशयः ॥१५॥ स्वलीलया त्वं हि जनान्पुनासि तन्मे स्वलीलाश्रवणं प्रयच्छ । तस्याः श्रुतेः सांद्रविलोचनोऽहं पुनामि चात्मानमतीव देव ॥ १६ ॥ पुरतस्ते स्फुटं वच्मि दोषराशिरहं किल । दोषा ममामिताः पांसुवृष्टिबिंदुसमा विभो ॥ १७ ॥ पापीयसामहं मुख्यः त्वं तु कारुणिकाग्रणीः । दयनीयो नहि क्वापि मदन्य इति भाति मे ॥ १८ ॥ ईदृशं मां विलोक्यापि कृपालो ते मनो यदि । न द्रवेत्तर्हि किं वाच्यमदृष्टं मे तवाग्रतः ॥ १९ ॥ त्वमेव सृष्टवान्सर्वान्दत्तात्रेय दयानिधे । वयं दीनतराः पुत्रास्तवाकल्पाः स्वरक्षणे ॥ २० ॥ जयतु जयतु दत्तो देवसंघाभिपूज्यो । जयतु जयतु भद्रो भद्रदो भावुकेज्यः ॥ जयतु जयतु नित्यो निर्मलज्ञानवेद्यो । जयतु जयतु सत्यः सत्यसंधोऽनवद्यः ॥ २१ ॥ यद्यह तव पुत्रः स्यां पिता माता त्वमेव मे । दयास्तन्यामृतेनाशु मातस्त्वमभिषिंच माम् ॥२२॥ ईशाभिन्ननिमित्तोपादानत्वात्तत्पुरस्य ते । जगद्योने सुतो नाहं दत्त मां परिपालय ॥ २३ ॥ तव वत्सस्य मे वाक्यं युक्तं वासूक्तमप्यहो । क्षंतव्यं मेपराधश्च त्वत्तोन्या न गतिर्हि मे ॥ २४ ॥ अनन्यगतिकस्यास्य बालस्य मम ते पितः । न सर्वथोचितोपेक्षा दोषाणां गणनापि च ॥ २५ ॥ अज्ञानित्वादकल्पत्वाद्दोषा मम पदे पदे । भवंति किं करोमीश करुणावरुणालय ॥ २६ ॥ अथापि मेऽपराधैश्चेद्दायास्यंतर्विषादताम् । पदाहतार्भकेणापि माता रुष्यति किं भुवि ॥ २७ ॥ रंकमंकगतं दीनं ताडयंतं पदेन च । माता त्यजति किं बालं प्रत्युताश्वासयत्यहो ॥ २८ ॥ तादृशं मामकल्पं चेन्नाश्वासयसि भो प्रभो । अहहा बत दीनस्य त्वां विना मम का गतिः ॥ २९ ॥ शिशुर्नायं शठः स्वार्थीत्यपि नायातु तेंऽतरम् । लोके हि क्षुधिता बालाः स्मरंति निजमातरम् ॥ ३० ॥ जीवनं भिन्नयोः पित्रोर्लोक एकतराच्छिशोः । त्वं तूभयं दत्त मम मास्तु निर्दयता मयि ॥ ३१ ॥ स्तवनेन न शक्तोऽस्मि त्वां प्रसादयितुं प्रभो । ब्रह्माद्याश्चकितास्तत्र मंदोऽहं शक्नुयां कथम् ॥ ३२ ॥ दत्त त्वद्दासभाष्यानि सूक्तासूक्तानि यानि च । तानि

स्वीकुरु सर्वज्ञ दयालो भक्तभावन ॥ ३३ ॥ ये त्वां शरणमापन्नाः कृतार्था अभवन्हि ते । एतद्विचार्य मनसा दत्त त्वां शरणं गतः ॥ ३४ ॥ त्वन्निष्ठास्त्वत्परा भक्तास्तव ते सुखभागिनः । इति शास्त्रानुरोधेन दत्त त्वां शरणं गतः ॥ ३५ ॥ स्वभक्ताननुगृह्णाति भगवान्भक्तवत्सलः । इति संचिंत्य संचिंत्य कथंचिद्धारयाम्यसून् ॥ ३६ ॥ त्वद्भक्तस्त्वदधीनोऽहमस्मि तुभ्यं समार्पितम् । तनुं मनो धनं चापि कृपां कुरु ममोपरि ॥३७॥ त्वयि भक्तिं नेव जाने न जानेऽर्चनपद्धतिम् । कृतं न दानधर्मादि प्रसादं कुरु केवलम् ॥ ३८ ॥ ब्रह्मचर्यादि नाचीर्णं नाधीता विधितः श्रुतिः । गार्हस्थ्यं विधिना दत्त न कृतं तत्प्रसीद मे ॥ ३९ ॥ न साधुसंगमो मेऽस्ति न कृतं वृद्धसेवनं । न शास्त्रशासनं दत्त केवलं त्वं दयां कुरु ॥ ४० ॥ ज्ञातेऽपि धर्मे नहि मे प्रवृत्तिर्ज्ञातेऽप्यधर्मे न ततो निवृत्तिः श्रीदत्तनाथेन हृदि स्थितेन त्वया नियुक्तोऽस्मि तथा करोमि ॥ ४१ ॥ कृतिः सेवा गतिर्यात्रा स्मृतिश्चिंता स्तुतिर्वचः । भवंतु दत्त मे नित्यं त्वदीया एव सर्वथा ॥ ४२ ॥ प्रतिज्ञा ते न भक्ता मे नश्यंतीति सुनिश्चितम् । श्रीदत्त चिरा आनीय जीवनं धारयाम्यहं ॥ ४३ ॥ दत्तोऽहं ते मयेतीश आत्मदानेन योऽभवत् । अनसूयात्रिपुत्रः स श्रीदत्तः शरणं मम ॥ ४४ ॥ कार्तवीर्यार्जुनायादाद्योगर्द्धिमुभयीं प्रभुः । अव्याहतगतिं चासौ श्रीदत्तः शरणं मम ॥ ४५ ॥ आन्वीक्षिकीमलर्काय विकल्पत्यागपूर्वकम् । यो ददावाचार्यवर्यः स श्रीदत्तः शरणं मम ॥ ४६ ॥ चतुर्विंशतिगुर्वाप्त हेयोपादेयलक्षणं । ज्ञानं यो यदवेऽदात्स श्रीदत्तः शरणं मम ॥ ४७ ॥ मदालसागर्भरत्नालर्काय प्राहिणोच्च यः । योगपूर्वात्मविज्ञानं श्रीदत्तः शरणं मम ॥ ४८ ॥ आयूराजाय सत्पुत्रं सेवाधर्मपराय यः । प्रददौ सद्गतिं चैष श्रीदत्तः शरणं मम ॥४९॥ लोकोक्तपतये विष्णुदत्तविप्राय योऽर्पयत् । विद्यास्तच्छ्राद्धभुग्यः स श्रीदत्तः शरणं मम ॥ ५० ॥ भर्त्रा सहानुगमनविधिं यः प्राह सर्ववित् । राममात्रे रेणुकायै श्रीदत्तः शरणं मम ॥ ५१ ॥ समूलमान्हिकं कर्म सोमकीर्तिनृपाय यः । मोक्षोपयोगि सकलं श्रीदत्तः शरणं मम ॥ ५२ ॥ नामधारकभक्ताय निर्विण्णाय न्यदर्शयत् । तुष्टः स्तुत्या स्वरूपं स श्रीदत्तः शरणं मम ॥ ५३ ॥ यः कलिब्रह्मसंवादमिषेणाऽह युगस्थितीः । गुरुसेवां च सिद्धाऽऽस्याच्छ्रीदत्तः शरणं मम ॥ ५४ ॥ दुर्वासःशापमाश्रुत्य योऽचरीपार्थमध्ययः । नानावतारधारी स श्रीदत्तः शरणं मम ॥ ५५ ॥ अनसूयासतीदुग्धास्वादायेव त्रिरूपतः । अथातरदजो योऽपि श्रीदत्तः शरणं मम ॥ ५६ ॥ पीठापुरे यः सुमतिब्राह्मणीभक्तितोऽभवत् । श्रीपादस्तत्सुतत्राता श्रीदत्तः शरणं मम ॥५७॥ प्रकाशयामास सिद्धमुखात्स्थापनमादितः महाबलेश्वरस्यैष श्रीदत्तः शरण मम ॥ ५८॥ चंडाल्यपि यतो मुक्ता गोकर्णे तत्र योऽवसत् । लिंगतीर्थमये त्र्यब्दं श्रीदत्तः शरणं मम ॥ ५९ ॥ कृष्णाद्वीपे कुरुपुरे कुपुत्रं जननीयुतम् । यो हि मृत्योरपाच्छ्रीपाच्छ्रीदत्तः शरणं मम ॥ ६० ॥ रजकायापि दास्यन्यो राज्यं कुरुपुरे प्रभुः । तिरोभूदज्ञदृष्ट्या स श्रीदत्तः शरणं मम

॥ ६१ ॥ विश्वासघातिनश्चोरान्स्वभक्तघ्नान्निहत्य यः । जीवयामास भक्तं स श्रीदत्तः शरणं मम ॥ ६२ ॥ करंजनगरेंबायाः मदोपव्रतसिद्धये । योऽभूत्सुतो नृहर्याख्यः श्रीदत्तः शरणं मम ॥ ६३ ॥ मूको भूत्वा व्रतात्पश्चाद्ददन्वेदान्स्वमातरं । प्रव्रजन् बोधयामास श्रीदत्तः शरणं मम ॥ ६४ ॥ काशीवासी स संन्यासी निराशीर्धर्मदो वृषम् । वैदिकं विशदीकुर्वन् श्रीदत्तः शरणं मम ॥ ६५ ॥ भूमिं प्रदक्षिणीकृत्य सशिष्यो वीक्ष्य मातरं । जहार द्विजशूलार्तिं श्रीदत्तः शरणं मम ॥ ६६ ॥ शिष्यत्वेनोररीकृत्य सायंदेव ररक्ष यः । भीतं च क्रूरयवनाच्छ्रीदत्तः शरणं मम ॥६७॥ प्रेरयंस्तीर्थयात्रायै तीर्थरूपोऽपि यः स्वकान् । सम्यग्धर्ममुपादिश्य श्रीदत्तः शरणं मम ॥ ६८ ॥ सशिष्यः पर्यलीक्षेत्रे वैद्यनाथसमीपतः । स्थित्वोद्दधार मूढं यः श्रीदत्तः शरणं मम ॥ ६९ ॥ विद्वत्सुतमविद्यं य आगतं लोकनिंदितम् । छिन्नजिह्वं बुधं चक्रे श्रीदत्तः शरणं मम ॥ ७० ॥ नृसिंहवाटिकास्थो यः मददौ शाकभुङ् निधिम् । दरिद्रब्राह्मणायासौ श्रीदत्तः शरणं मम ॥७१॥ भक्ताय त्रिस्थलीयात्रां दर्शयामास यः क्षणात् । चकार वरदं क्षेत्रं श्रीदत्तः शरणं मम ॥७२॥ प्रेतार्तिं वारयित्वा यो ब्राह्मण्यै भक्तिभाविनः । ददौ पुत्रौ स गतिदः श्रीदत्त शरणं मम ॥७३॥ तत्त्वं यो मृतपुत्रायै बोधयित्वाप्यजीवयत् । मृतं कल्पद्रुमस्थः स श्रीदत्तः शरणं मम ॥७४॥ दोहयामास भिक्षार्थं यो वंध्यां महिषीं प्रभुः । दारिद्र्यदावदावः स श्रीदत्तः शरणं मम ॥ ७५ ॥ राजप्रार्थित एत्यास्थान्मठे यो गाणगापुरे । ब्रह्मरक्षःसमुद्धर्ता श्रीदत्तः शरणं मम ॥ ७६ ॥ विश्वरूपं निंदकाय शिबिकास्थः स्वलंकृतः । गर्वहादर्शयद्यः स श्रीदत्तः शरणं मम ॥ ७७ ॥ त्रिविक्रमेण चानीतौ गर्वितौ ब्राह्मणद्विषौ । बोधयामास तौ यः स श्रीदत्तः शरणं मम ॥ ७८ ॥ उक्त्वा चतुर्वेदशाखातदंगादिकमीश्वरः । विप्रगर्वहरो यः स श्रीदत्तः शरणं मम ॥ ७९ ॥ सप्तजन्मविदं सप्तरेखोल्लंघनतो ददौ । यो हीनाय श्रुतिस्फूर्तिं श्रीदत्तः शरणं मम ॥ ८० ॥ त्रिविक्रमायाह कर्मगतिं दत्तविदा पुनः । विधुक्तं पतितं चक्रे श्रीदत्तः शरणं मम ॥ ८१ ॥ रक्षसे वामदेवेन भस्ममाहात्म्यमुद्गतिम् । उक्तां त्रिविक्रमायाह श्रीदत्तः शरणं मम ॥ ८२ ॥ गोपीनाथसुतो रुग्णो मृतस्तत्स्त्री शुशोच ताम् । बोधयामास यो योगी श्रीदत्त शरणं मम ॥ ८३ ॥ गुर्वगस्त्यर्षिसंवादरूपं स्त्रीधर्ममाह यः । रूपांतरेण स प्राज्ञः श्रीदत्तः शरणं मम ॥ ८४ ॥ विधवाधर्ममादिश्यानुगमं चाक्षभस्मदः । अजीवनन्तं विप्रं श्रीदत्तः शरणं मम ॥ ८५ ॥ वेश्यासत्यै तु रुद्राक्षमाहात्म्ययुतमीदृकृतम् । प्रसादे प्राह यः सत्यै श्रीदत्तः शरणं मम ॥ ८६ ॥ शतरुद्रीयमाहात्म्यं मृतराट्सुतजीवनम् । सत्यै शशंस स गुरुः श्रीदत्त शरणं मम ॥ ८७ ॥ कचाख्यानं स्त्रियो मंत्रानर्हतार्थसुभाग्यदम् । सोमव्रतं च यः प्राह श्रीदत्तः शरणं मम ॥ ८८ ॥ ब्राह्मण्या दुःस्वभावं यो निवार्यान्हिकमुत्तमम् । शशंस ब्राह्मणायासौ श्रीदत्तः शरणं मम ॥८९॥ गार्हस्थ्यधर्मं विप्राय प्रत्यवायजिहासया । क्रममुक्त्यै य ऊचे स श्रीदत्तः शरणं मम ॥ ९० ॥ त्रिपुंपर्याप्तपाकेन भोजयामास यो

नृणाम् । सिद्धश्चतुःसहस्राणि श्रीदत्त शरणं मम ॥ ९१ ॥ अश्वत्थसेवामादिश्य पुत्रौ योपात्फलप्रदः । चित्रकृद् वृद्धवंध्यायै श्रीदत्तः शरणं मम ॥ ९२ ॥ कारयित्वा शुष्काष्ठसेवां तद्वृक्षतां नयन् । विप्रकुष्ठं जहारासौ श्रीदत्तः शरणं मम ॥ ९३ ॥ भजंतं कष्टतोऽप्याह सार्यदेवं परीक्ष्य यः । गुरुसेवाविधानं स श्रीदत्तः शरणं मम ॥९४॥ शिवतोषकरीं काशीयात्रां भक्ताय योऽवदत् । सविधिं विहितां त्वष्ट्रा श्रीदत्तः शरणं मम ॥९५॥ कौंडिण्यधर्मविहितमनंतव्रतमाह यः । कारयामास तद्योऽपि श्रीदत्त शरणं मम ॥ ९६ ॥ श्रीशैलं तंतुकायासौ योगगत्या व्यदर्शयत् । शिवरात्रिव्रताह स श्रीदत्तः शरणं मम ॥ ९७ ॥ ज्ञापयित्वाप्यर्त्यत्वं स्वस्य दृष्ट्या चकार यः । विकुष्ठं नंदिशर्माणं श्रीदत्तः शरणं मम ॥ ९८ ॥ नरकेसरिणे स्वप्ने [illegible] कलेवरलिंगगम् । दर्शयित्वानुजग्राह श्रीदत्तः शरणं मम ॥ ९९ ॥ अष्टमूर्तिधरोऽप्यष्टग्रामगो भक्तवत्सलः । दीपावल्युत्सवेऽभूत्स श्रीदत्तः शरणं ममः ॥१००॥ अपक्कं छेदयित्वापि क्षेत्रे शतगुणं ततः । धान्यं शूद्राय योऽदास्य श्रीदत्त शरणं मम ॥ १०१ ॥ गाणगापुरके क्षेत्रे योऽष्टतीथान्यदर्शयत् । भक्तेभ्यो भीमरथ्यां स श्रीदत्तः शरणं मम ॥ १०२ ॥ पूर्वदत्तवरायादाद्राज्यं स्फोटकरुग्धरः । म्लेच्छाय दृष्टिं चेष्टं स श्रीदत्तः शरणं मम ॥ १०३ ॥ श्रीशैलयात्रामिषेण वरदः पुष्पपीठगः । कलौ तिरोऽभवद्यः स श्रीदत्तः शरणं मम ॥ १०४ ॥ निद्रा मातृपुरेऽस्य सह्यशिखरे पीठं मिर्मक्षा पुरे । काश्याख्ये करहाटकेऽर्घ्यमनरे भिक्षास्य कोलापुरे ॥ पांचाले भुजिरस्य विठ्ठलपुरे पत्रं विचित्रे पुरे । गांधर्वे भुजिराचमः कुरुपुरे दूरे स्मृतो नांतरे ॥ १०५ ॥ अमलकमलवक्त्रः पद्मपत्राभनेत्रः परविरतिकलत्रः सर्वथा यः स्वतंत्रः । स च परमपवित्रः सत्कमंडल्वमत्रः परमरुचिरगात्रो योऽनसूयात्रिपुत्रः ॥ १०६ ॥ नमस्ते समस्तेष्टदात्रे विधात्रे नमस्ते समस्तेडितावौघहर्त्रे नमस्ते समस्तेंगितज्ञाय भर्त्रे नमस्तेनमस्तेष्टकर्त्रेऽकहर्त्रे ॥ १०७ ॥ नमो नमस्तेऽस्तु पुरांतकाय नमो नमस्तेस्त्वसुरांतकाय । नमो नमस्तेऽस्तु खलांतकाय दत्ताय भक्तार्तिविनाशनाय ॥ १०८ ॥ श्रीदत्तदेवेश्वर मे प्रसीद श्रीदत्तसर्वेश्वर मे प्रसीद । प्रसीद योगेश्वर देहि योग त्वदीयभक्तेः कुरु मा वियोगम् ॥ १०९ ॥ श्रीदत्तो जयतीह दत्तमनिशं ध्यायामि दत्तेन मे । हृच्छुद्धिर्विहिता ततोऽस्तु सततं दत्ताय तुभ्यं नमः ॥ दत्तान्नास्ति परायणं श्रुतिमतं दत्तस्य दासोस्म्यहम्ः । श्रीदत्ते परभक्तिरस्तु मम भो दत्त प्रसीदेश्वर ॥ ११० ॥

इति प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीदत्तभावसुधारसस्तोत्रं संपूर्णम् ॥

---

# ७. दत्तनामस्मरणम्

शास्त्रं शस्त्रं मल्लविद्यादि सर्वं स्नानं ध्यानं योगयोगादिकं च । पूर्तेष्टादि प्राणवित्तापहारि श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ १ ॥ न त्वायासो वित्तहनिर्न चैवं प्रत्यादेशो नो कश्चित्वाद्यपेक्षा । सर्वश्रेष्ठं साधनानां वरिष्ठं श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ २ ॥ कामं क्रोधं जेतुकामो यदि स्याः शोकं मोहं त्यक्तुकामोऽथवा चेत् । रागद्वेषौ हातुकामोऽथ वन्द्यो श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ ३ ॥ बाल्यं खेलौ कामिनीषु प्रकामं तारुण्यं ते मूढ व्यर्थं गतं भोः । वृद्धत्वं हा मृत्युमार्गानुसारि श्वासे श्वासे दत्तनाम स्मरात्मन् ॥४॥ जायापुत्रक्लेशवित्तादि सर्वम् अवश्यं तद् ध्यायते मूढ कस्मात् । आदावन्ते दुःखमूलं च मध्ये श्वासे श्वासे दत्तनाम स्मरात्मन् ॥५॥ जातं कस्माद् गम्यते कुत्र वन्द्यो स्थानं कस्माच्चिन्तयाहर्निशं तत् । सर्वं ह्यातं श्रीशनामैव सत्यं श्वासे श्वासे दत्तनाम स्मरात्मन् ॥६॥ नाना धर्मा भ्रान्तिमूलाश्च सर्वे ह्येकं सत्यं नाशवत्सर्वमन्यत् । नाना मार्गाः कष्टमूलाश्च सर्वे श्वासे श्वासे दत्तनाम स्मरात्मन् ॥७॥ प्रातः पूर्वाण्हे पराण्हे च सायं रात्रावेवं पूर्वरात्रे निशीथे । प्रत्यूषेऽपि श्रीशमेकं वदाभे श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ ८ ॥ स्नाने पाने भोजने यानकाले कार्येऽकार्ये सुस्थितं चोपविष्टम् । सुप्तौ स्वप्ने चिन्तय श्रीशमेकं श्वासे श्वासे दत्तनाम स्मरात्मन् ॥९॥ त्यक्त्वालस्यं तामसं पापमूलं जन्माभ्यासं राजसं कर्म सर्वम् । भक्तिप्राप्यं श्रीशमेकं प्रयाहि श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ १० ॥ वित्तं भूमावश्वयानादि गोष्ठे मंत्रं मार्गे बान्धवादि श्मशाने । देहो वन्हौ देहलिस्थं कलत्रं श्वासे याति कोऽपि सार्धं न याति ॥ ११ ॥ वेदं वादं वादशूरेषु हित्वा काव्यं भाणं भण्डवीरे विहाय । नृत्यं गीतं नादलुब्धे समर्प्य श्वासे श्वासे दत्तनाम स्मरात्मन ॥ १२ ॥ स्वादुस्वादु सत्कदन्नादि मुक्त्वा हीने हर्म्येऽहीरघोषे शयित्वा । चीरं चेलं क्षौमवल्कादि धृत्वा श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ १३ ॥ मन्त्रं तन्त्रं यन्त्रविद्यादि सर्वं त्यक्त्वा दूरे तीर्थयात्रादिकं च । पाठं पूजां पुण्ड्रमेवापि कष्टं श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ १४ ॥ आयुः स्वल्पं स्वल्पमत्यन्तमेतत् कालव्याघ्रो मर्त्यमेवं निहन्ति । तारुण्य ते वारिपूरप्रकल्पं श्वासे श्वासे दत्तनाम स्मरात्मन ॥ १५ ॥ इष्टद्रव्यं दृष्टनष्टस्वरूपं कीर्तिः का सा पद्मपत्राम्बुकल्पा । त्यक्त्वा व्यर्थं लोकनृत्यानुनृत्यं श्वासे श्वासे दत्तनाम स्मरात्मन् ॥१६॥ स्वार्थं सर्वे मानयन्ति प्रकामं निःस्वं कोऽपि प्रेक्षते नैव लोके । स्वार्थः प्रेष्ठो दुर्लभो यः परार्थी श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ १७ ॥ यावत्स्वस्थं रोगहीनं वपुः स्याद् यावत्कालो नेक्षते सेर्ष्यमत्र । तावत्कालो जागृहि त्वं प्रमादिन् श्वासे श्वासे दत्तनाम स्मरात्मन् ॥१८॥ निद्रासि त्वं निर्भरं देहगेहे चोराश्चान्तः सर्वतो हा विशन्ति । मुष्णन्त्येते ह्यात्मवित्तं प्रगृह्य ह्युत्तिष्ठात्मन् स्वापमेतं जहीहि ॥ १९ ॥ केचिद्याता ह्यर्धयातश्च केचित् केचिन्मार्गे नीयमाना पुरस्ते । निद्रासि त्वं केन सौख्येन मूढ श्वासे श्वासे दत्तनाम

स्मरात्मन् ॥२०॥ कामी भोगे ब्रह्मचर्येऽतिक्लीबो मूर्खो दाने दानशून्ये कदर्यः । भक्ता-
वन्धो नास्तिको भक्त्यभावे सर्वं त्वेवं दुर्जनैर्दूषितं स्यात् ॥ २१ ॥ क्षन्तव्योऽस्माल्लोक-
जल्पोऽनिवार्यो नो ह्यातव्यो धर्ममार्गः कदाचित् । ग्राह्यं नित्यं दत्तनामामृतं सत्
त्याज्यः सङ्गो दुःसहो दुर्जनानाम् ॥२२॥ माता दत्तस्त्वात्पिता दत्त एव । स्वामी दत्तस्ते
सखा दत्त एव । त्यक्त्वा ह्येनं वीक्षसे कुत्र चान्यं श्वासे श्वासे दत्तनाम स्मरात्मन् ॥२३॥
गन्तव्यं ते दूरमत्यन्तमेव मार्गे मा गाः सौख्यमल्पेन तुष्टः । सर्वे ह्येते धूर्तपाटच्चरास्ते
हृत्वा सर्वं त्वां बहिष्कासयन्ति ॥ २४ ॥ लब्ध्वा साङ्गं मानुषं जन्म मूढ विक्रीणीषे
धिग्वराटार्थमेतत् । प्राप्यं नैतत्पुण्यकोटिं विनान्य श्वासे श्वासे दत्तनाम स्मरात्मन्
॥२५॥ यावद्वित्तं ह्यार्ज्यते पुष्कलं ते सौख्यं तावत्पृच्छ्यते मूढ सर्वैः । नष्टे सारे लोक्यते
सर्वतोऽज्ञं श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ २६ ॥ हास्यं दृष्ट्वा हस्यते सर्वलोकै-
र्दुःखाश्रूणी हा न कोऽपि ममार्ष्टि । कुर्वन्मे मे किं मृतिं यासि मेष श्वासे श्वासे दत्तनाम
स्मरात्मन् ॥२७॥ क्षुद्व्याध्यर्थं ह्यौषधं भैक्ष्यमुक्तं शीताद्यार्तिध्वंसहेतोस्तु वासः । अन्य-
स्त्वेच्छा तन्यते मूढ कस्माच्छ्वासे श्वासे दत्तनाम स्मरात्मन् ॥ २८ ॥ काष्ठांश्चाग्नीन्
यो मृतस्यापि दत्ते किं वृत्तिं नो जीवयुक्तस्य तेऽसौ । श्रद्धायुक्तं तस्य पादौ गृहाण श्वासे
श्वासे दत्तनाम स्मरात्मन् ॥ २९ ॥ मिथ्याऽयं ते तौ मोहमूलोऽभिमानो यानश्वानस्येव
कर्तृत्वमूलः । श्रीशादान्यः कः प्रभुः स्यात्त्रिलोक्यां श्वासे श्वासे दत्तनाम स्मरात्मन् ॥३०॥
भीतास्यैवार्कोऽपि प्रातरुदेति नक्तं चेन्दुर्निर्मले खे विभाति । ऊर्ध्वं क्षिप्तं वस्तु निम्नं
प्रयाति श्वासे श्वासे दत्तनाम स्मरात्मन् ॥३१॥ इन्द्रः काले वर्षति त्यक्तगर्वं भूमिः शुष्का
सस्यपूर्णा विभाति । जग्धं ह्यन्नं पच्यते जाठरेण श्वासे श्वासे दत्तनाम स्मरात्मन् ॥३२॥
सत्यं शौचं ब्रह्मचर्यादिकं च श्रद्धा क्षान्तिस्तोष एतच्चितुष्व । दूरीकृत्यान्यत्प्रतीप यदस्य
श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ त्याज्यः सङ्गः सर्वथा दुःखमूलं नो चेच्छक्यः सद्भिरेव
प्रकार्यः त्यक्त्वा निन्दा योषितोऽन्यस्य चर्चां श्वासे श्वासे दत्तनाम स्मरात्मन ॥३४॥
त्याज्यः कामः सर्वथा जन्ममूलं नो चेच्छक्यस्त्रीशप्राप्त्यै विधेयः श्रीशो दत्तो ह्यौषधं
दुःखव्याधेः । श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ ३५ ॥ क्रोधस्त्याज्यः सर्वथा पापमूलं
नो चेत्कार्यस्तीव्रपापप्रकोपे । त्यक्त्वा व्यर्थं ह्यन्यदोषेक्षणं च श्वासे श्वासे दत्तनाम
स्मरात्मन् ॥ ३६ ॥ प्राणायामं पीडणं नासिकायाः पञ्चाग्न्याद्युत्तापनं देहवल्लेः ।
वृक्षस्कन्धोद्बन्धनादि प्रहाय श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ ३७ ॥ मार्गे मार्गे
पर्वतप्रायविघ्ना विघ्ने विघ्ने धैर्यसारच्युतिः स्यात् । नो चेद्दत्तालम्बनं वज्रसारं श्वासे
श्वासे दत्तनाम स्मरात्मन् ॥ ३८ ॥ यामिन्येषा बद्धभीमान्धकारा भूता ह्येतद्दीपयन्तो
भ्रमति । भीमारावैस्तर्जयन्तः समन्ताच्छ्वासे श्वासे दत्तनाम स्मरात्मन् ॥ ३९ ॥

पश्याकाशं ह्यम्बुदैर्व्याप्तमेतन्मेघा ह्येते गर्जयन्तश्चरन्ति । विद्युद्गर्भाः कम्पयन्तोऽद्रिसानून्

श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ ४० ॥ श्वाना ह्येते भीषणं हा भपन्ति पादौ स्निग्धा गूढमन्तर्दशन्ति । त्यक्त्वा ह्येतान्दूरतो याहि बन्धो श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ ४१ ॥ कूजत्युद्याने कलं कोकिलोऽसौ रेवा सापि श्रीशागनं करोति । शेपे लम्बं हा कथं कुम्भकर्ण श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ ४२ ॥ कृत्वा केकां नीलकण्ठोऽपि नौति बर्हाण्युत्सार्य प्रभुं वीजयत्यु । कामं तल्पे सुप्यते ते कथं धिक् श्वासे श्वासे दत्तनाम स्मरात्मन् ॥४३॥ वाणिज्येच्छा वर्तते चेत्कुरुष्व वाणिज्यं भो नामसङ्कीर्तनस्य । हानिः कष्टं नो कदाप्यल्पमत्र श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ ४४ ॥ चित्तं बन्धो वर्तते कर्पणे चेत् कामं कुर्याः सद्गुणानां कृषिं भोः । नो भीतिः स्याद्वर्पणावर्षणस्य श्वासे श्वासे दत्तनाम स्मरात्मन् ॥४५॥ सेवां बन्धो मन्यते चेद्गरिष्ठां त्यक्त्वा मानं साधुसेवां विधेहि । भीतिर्नो स्यादर्धचन्द्रस्य चात्र श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ ४६ ॥ योगेच्छा चेत्त्रीशयोगं प्रयुङ्क्ष्व भोगेच्छा चेदात्मसौख्यं च भुङ्क्ष्व । स्वायत्तं यच्छाश्वतं तृप्तिपूर्णं श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ ४७ ॥ कायो माया मोहहेतुश्च मूढ नो स्वायत्ता वञ्चिका ह्यन्तकाले । एवं चेत्तत्स्वेच्छया नार्प्यते किं त्रीशस्याङ्घ्र्योर्दासभावेन मूढ ॥ ४८ ॥ आयास्यन्ति त्वत्र दूता यमस्य बध्वा पाशैर्नेतुकाम भवन्तम् । को वा प्राणिन्मोचयिष्यत्यमीभ्यः श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ ४९ ॥ योऽदाद्वाचं स्वीक्षणादिप्रशक्तिं देवः कोऽसौ मृष्यते किं कदाचित् । त्रीशो दत्तो जीवनं जीवनेष्टः श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ ५० ॥ राजाज्ञायाः पालनात्कुप्यतेऽसौ तद्वत्स्वाज्ञापालनादेव देवः । नूनं दासस्य त्वनन्यस्य चिन्ता भर्तुः काले नैव दासं जहाति ॥ ५१ ॥ त्रीशो धीशास्तारकास्तिष्ये एकः । सर्वांस्त्यक्त्वा तं शरण्यं प्रयाहि । स्रग्गाद्यायंब्जत्रिशूलादि धृत्वा भक्तान्पाति प्रेमबन्धेन बद्धः ॥ ५२ ॥ मार्गोऽयं तेऽत्यन्तवैपम्यपूर्णो हिंस्रव्याप्तः शूलकीर्णोऽतिभीमः । धीर धृत्वात्रेयदीपं प्रयाहि श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ ५३ ॥ को जानीते श्वः कथं वर्तते ते कालग्रस्ते जीवलोके समन्तात् । कर्तव्यं यच्छीघ्रमेवावधेहि श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ ५४ ॥ मार्गे मार्गे नूतना स्वर्णवीथिर्वीथौ वीथौ काञ्चनं नेत्रकर्षि । धृत्वा बालान्स्वर्णकारास्तुदन्ति श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ ५५ ॥ मार्गे मार्गे मिष्टलड्डूकगेहं गेहे गेहे लड्डुकाः स्वादपूर्णाः । रिञ्चन्त्यज्ञान्मोहयित्वा रसाद्यैः श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ ५६ ॥ मग्नप्रायो वासनावारिपूरे हन्तात्मँस्ते दुस्तरे कायकोलः ॥ देवं दत्तं कर्णधारं वृणीष्व नान्यः कश्चित्पारयेत्त्वां तदाघात् ॥ ५७ ॥ कः कावन्यो दुःखहर्तेति चक्ष्व कारुण्याब्धिं दत्तमेवेहि दीन । श्रद्धत्स्वैतद्वच्मि ते सारभूतं श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ ५८ ॥ माता कुप्येद्रक्षिताऽत्राऽस्ति तातः क्रुद्धे ताते रक्षतीहास्य चाम्बा । क्रुद्धे रक्षत्को नु दत्ते त्रिलोक्यां श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ ५९ ॥ भूत्वा सर्वे मोक्तुकामा मिलन्ति नष्टैश्वर्ये तत्क्षणे विस्मरन्ति । संबन्धास्ते स्वार्थमूला ह मूढ श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ ६० ॥

सस्याकीर्णं शाद्वलं पश्य सर्वं धावन्त्येता धेनवोऽपि प्रहर्षम् । शुष्कं नेयाद्ग्रासभोऽपि प्रमादा-च्छ्वासे श्वासे दत्तनाम स्मरात्मन् ॥६१॥ कामुस्त्याप्ति दुःखदोषणार्थं निःस्वस्यैर्थं वृद्धपङ्कोस्तु यत्रिम् । पुण्याकृर्षं पापमेतमकर्षं श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ ६२ ॥ शक्तौ दत्तं शक्तिनाशेऽपि दत्तं भूतौ दत्तं भूतिनाशेऽपि दत्तम् । बाल्ये दत्तं वृद्धभावेऽपि दत्तं श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ ६३ ॥ याने दत्तं पादयानेऽपि दत्तं ग्रामे दत्तं दत्तमेव श्मशाने । गोष्ठे दत्तं मन्दिरे दत्तमेव श्वासे श्वासे दत्तनाम स्मरात्मन् ॥६४॥ लग्ने दत्तं सूतके दत्तमेव क्षेत्रे दत्तं दत्तमेवापि पीठे । काले दत्तं दत्तमेवाप्यकाले श्वासे श्वासे दत्तनाम स्मरात्मन् ॥६५॥ लोके दत्तं दत्तमेवारण्ये कारागारे भीमाकारागृहे च । काशीक्षेत्रे त्वन्त्यजाभीरघोषे श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ ६६ ॥ दत्तस्त्वेको जीवनं जीवनाना दत्तस्त्वेको मारण मारणानाम् ॥ दत्तस्त्वेको भीषणं भीषणाना श्वासे श्वासे दत्तनाम स्मरात्मन् ॥६७॥ दत्तस्त्वेकः कारणं कारणाना दत्तस्त्वेको जारणं जारणानाम् । दत्तस्त्वेक-स्तारण तारणाना श्वासे श्वासे दत्तनाम स्मरात्मन् ॥६८॥ दत्तस्त्वेको भेषजं भेषजाना दत्त-स्त्वेको ह्यञ्जनं चाञ्जनानाम् । दत्तस्त्वेको ह्यमृतं चामृताना श्वासे श्वासे दत्तनाम स्मरात्मन् ॥६९॥ दत्तस्त्वेको भूपतिर्भूपतीना दत्तस्त्वेकोस्त्वी वराणाम् । दत्तस्त्वेको देशिको देशिकाना श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ ७० ॥ दत्तस्त्वेको ब्राह्मणो ब्राह्मणाना दत्तस्त्वेकः क्षत्रियः क्षत्रियाणाम् । दत्तस्त्वेको वैश्यजो वैश्यजानां दत्तस्त्वेको ह्यन्त्यजस्त्वथ-न्त्यजानाम् ॥ ७१ ॥ दत्तस्त्वेकः पालकः पालकानां दत्तस्त्वेकः पोषकः पोषका-णाम् । दत्तस्त्वेको मोक्षदाता नाराणां श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ ७२ ॥ दत्तस्त्वेको ज्योतिषा ज्योतिरद्धा दत्तस्त्वेकश्छन्दसा छन्द आद्यम् । दत्तस्त्वेकालम्बनं कौ कवीना श्वासे श्वासे दत्तनाम स्मरात्मन् ॥७३॥ दत्तस्त्वेको भासको भासकानां दत्तस्त्वेकश्चालकश्चालकानाम् । दत्तस्त्वेकः पावनः पावनानां श्वासे श्वासे दत्तनाम स्मरा-त्मन् ॥७४॥ सर्वे देवा दत्तमेवास्तुवन्ति वेदाः सर्वे दत्तमावर्णयन्ति सर्वे भेदो दत्तमेवानयन्ति श्वासे श्वासे दत्तनाम स्मरात्मन् ॥७५॥ नाम्ना तीर्णो रामगाथाकृदादौ नाम्ना तीर्णोऽ-जामिलोऽप्यन्तकाले नाम्ना तीर्णो पिङ्गला पण्ययोषा श्वासे श्वासे दत्तनाम स्मरात्मन् ॥७६॥ कायः काशी ह्यात्मदेवोऽत्र दत्तो वामा गङ्गा दक्षनासाऽर्कजाऽत्र । मध्याऽज्ञा सा सङ्गमो ब्रह्मरन्ध्रे स्नात्वा ध्यात्वा मुच्यते मुक्त एव ॥ ७७ ॥ देहः सह्यो हृन्तु मातापुरं स्यादत्रिर्ज्ञानं भक्तिरेकाऽनसूया । विज्ञानं तन्निर्मलं दत्तनाम ध्यात्वा सन्तो जन्ममृत्यू तरन्ति ॥ ७८ ॥ गेयं तिष्ये तारकं दत्तनाम ध्येयं स्वान्ते निर्मलं दत्तधाम । नेय ह्यायुर्दत्तभक्तान्तिके भोः पेयं कर्णैर्दत्तलीलामृत सत् ॥ ७९ ॥ भ्रष्टं ज्ञानं कर्ममार्गो विनष्टे भक्तिः पङ्गुर्योगमार्गोऽपि गूढः । शिष्या लुब्धा देशिकाः स्वार्थसारास्तिष्ये त्वेकं तारकं दत्तनाम ॥ ८० ॥ यज्ञाना भो नामयज्ञोऽस्मि पार्थ गीताप्येवं वक्ति नामप्रभावम् त्यक्त्वा दूरे सर्वमन्यद्धचसारं श्वासे श्वासे दत्तनाम स्मरात्मन् ॥८१॥ देयं दानंदीननारा-

यणेषु धेयं शीर्षं भक्तपदाम्बुजेषु । ध्येयो दत्तः साधुवृन्दानुगेषु श्वासे श्वासे दत्तनाम स्मरात्मन् ॥८२॥ मार्गे मार्गे निर्मलं साधुवृन्दं वृन्दे वृन्दे दत्तनामानुघोषः । घोषे घोषे पातकानां प्रणशो नाशे नाशे मुक्तिजम्बुप्रसादः ॥ ८३ ॥ मार्गे मार्गे वित्तदारानुदासा दासे दासे काञ्चनस्त्रीविवादाः । वादे वादे वर्धते वैरवह्निर्वह्नौ वह्नौ दह्यते स्नेहतन्तुः ॥८४॥ यो यो यद्यत्प्रार्थयेत्तान्धभक्तस्तत्तस्यास्ते तत्संशयो नैव चात्र भक्ता भक्तिं कामिनः काममेव लब्ध्वा सौख्यं दुःखमेवानुयान्ति ॥ ८५ ॥ मा गा बन्धो दत्तमेकं विहाय ह्यन्यत्रात्मन् सौख्यलेशोऽपि नो ते । त्यक्त्वा स्रोतो ध्यायते किं मृगाम्बु श्वासे श्वासे दत्तनाम स्मरात्मन् ॥८६॥ हित्वा स्वच्छं मानसं कं यथाऽसौ गच्छेत्काकः पल्वलं पापराशिः ॥ मूर्खोऽप्येवं स्वात्मासौख्यं विहाय धावेद्दीनो वित्तदारादिगर्ते ॥८७॥ विद्यादर्पं वित्तगर्वं विहाय भक्तो सत्पदाब्जं प्रयाहि । पापान्युक्त्वाऽऽशीःप्रसादं ह्यवाप्य तत्प्रस्थान्ते दत्तनाम स्मरात्मन् ॥८८॥ वेदा मूका नेति नेति ब्रुवन्ति देवाः सर्वे दत्तमेवाविशन्ति । शेषो भग्नः का कथा त्वदृशानां श्वासे श्वासे दत्तनाम स्मरात्मन् ॥८९॥ दत्तस्त्वेको मङ्गलं मङ्गलानां दत्तस्त्वेकः सुन्दरः सुन्दराणाम् । दत्तस्त्वेकः कामदः कामदानां श्वासे श्वासे दत्तनाम स्मरात्मन् ॥९०॥ आदौ दत्तो मध्यम एवापि दत्तो दत्ते ह्यन्ते सर्वदा दत्त एव । अन्यत्सर्वं नश्वरं विद्धि लोके श्वासे श्वासे दत्तनाम स्मरात्मन् ॥९१॥ विद्याध्राद्या दत्तमेव स्तुवन्ति गन्धर्वाद्या दत्तमेकं गृणन्ति ॥ नागाद्यास्ते दत्तमेकं नमन्ति श्वासे श्वासे दत्तनाम स्मरात्मन् ॥९२॥ श्रेष्ठो दत्तो दत्त एकः कनिष्ठो भिक्षुर्दत्तः कर्मकारोऽपि दत्तः । बालो दत्तः स्त्री पुमानेव दत्तः सर्वो दत्तः सर्वरूपस्त्वरूपः ॥ ९३ ॥ दण्डी दत्तो दत्त एवास्त्यदण्डो मुण्डी दत्तो बद्धमौलिस्तु दत्तः । ज्ञानी दत्तो मूर्खराजोऽपि दत्तः सर्वो दत्तः सर्वरूपस्त्वरूपः ॥९४॥ चण्डो दत्तः शान्तरूपोऽपि दत्तः पापी दत्तः पुण्यरूपोऽपि दत्तः । चोरो दत्तो दानशूरोऽपि दत्तः सर्वो दत्तः सर्वरूपस्त्वरूपः ॥ ९५ ॥ रोगी दत्तो रोगमुक्तोऽपि दत्तो भोगी दत्तो भोगमुक्तोऽपि दत्तः । त्यागी दत्तः संग्रही दत्त एव सर्वो दत्तः सर्वरूपस्त्वरूपः ॥९६॥ रागी दत्तो रागमुक्तोऽपि दत्तः सङ्गी दत्तः सङ्गमुक्तोऽपि दत्तः । वर्णी दत्तो वर्णमुक्तोऽपि दत्तः सर्वो दत्तः सर्वरूपस्त्वरूपः ॥९७॥ राजा दत्तो भिक्षमाणोऽपि दत्तः स्वामी दत्तो दीनदासोऽपि दत्तः । मौनी दत्तो वाग्मदान्योऽपि दत्तः सर्वो दत्तः सर्वरूपास्त्वरूपः ॥ ९८ ॥ उत्तिष्ठात्मन् मोहनिद्रां जहीहि दत्तं देवं स्वात्मरूपं स्तुवीहि । त्यक्त्वा सर्वं तस्य सेवां विधेहि भित्त्वा मायां मायिनं शीघ्रमेहि ॥ ९९ ॥ देवो दत्तो मर्त्यजन्माऽपि दत्तस्तिर्यङ् दत्तः कीटकीटोऽपि दत्तः । स्थाणुर्दत्तो जङ्गमो दत्त एव सर्वो दत्तः सर्वरूपस्त्वरूपः ॥ १०० ॥ मायातीतो बद्धमायो विमायो जन्मातीतो जन्मदाता स्वजन्मा । कर्ताऽकर्ता जीवनं जीवहर्ता सर्वो दत्तः सर्वरूपस्त्वरूपः ॥ १०१ ॥ नष्टा वेला प्राप्यते नो पुनः सा क्षीणं चायुः कालसामीप्यमेव । कण्ठे भूपा भ्राम्यते किं वृथाऽन्धं श्वासे श्वासे दत्तनाम स्मरात्मन् ॥ १०२ ॥ ज्ञानं भक्तिः कर्मयोगश्च योगः सर्वेऽप्येते दत्तधाम्नि

मलीनाः । दत्तस्कन्धे सर्वशाखा मिलन्ति मूलं तस्माद्दत्तनाम स्मरात्मन् ॥ १०३ ॥ मूलं सिक्तं स्कन्धशाखाश्च तृप्ता धर्मे स्निग्धं स्वादुजम्बूं ददन्ते । शाखोत्पातं मा मन्नं प्रभङ्ग्धि मूलोत्सेकं त्वाफलं मा जहीहि ॥१०४॥ पायाद्देवो दीनबन्धुः समस्तान् देयान्मुक्तिं भुक्तिमेवापि मुक्त्यै । सर्वे सौख्यं माप्नुवन्तु मकृष्टं दुःखं नाल्पं निर्भयाः सन्तु सर्वे ॥ १०५ ॥ धन्यास्ते ये दत्तमेवानुयन्ति धन्यास्ते ये दत्तमेकं भजन्ति । धन्यास्ते ये दत्त-मेकं स्तुवन्ति धन्यास्ते ये दत्तमेवाविशन्ति ॥ १०६ ॥ नेत्रे दत्तं पश्यतं प्राणिमात्रे खे श्रूयन्तां दत्तशब्दाः समन्तात् ॥ जिह्वे भद्रे दत्तकीर्तिं स्तुवीहि पादौ यन्तॄ दत्तपादं प्रयातम् ॥ १०७ ॥ मूढो 'रङ्गो' रङ्गमायाविबद्धो रङ्गातीतं दत्तमेव प्रपन्नः । रङ्गं रागद्वेषशोकप्रपूर्णं छित्वा रङ्गं दत्तरङ्गे विलीनः ॥ १०८ ॥

इति श्रीदत्तपादारविन्दमिलिन्दब्रह्मचारिपाण्डुरङ्ग ( रङ्ग अवधूत ) महाराजविरचितं दत्तनामस्मरणस्तोत्रं सम्पूर्णम्

## ८. श्रीगुरुमहिमा

गुरु हा संतकुळींचा राजा । गुरु हा प्राणविसावा माझा । गुरुविण देव नाहीं दुजा । पाहतां त्रिलोकीं ॥ १ ॥ गुरु हा सुखाचा सागर । गुरु हा प्रेमाचा आगर । गुरु हा धैर्याचा डोंगर । कदाकाळीं डळमळेना ॥ २ ॥ गुरु हा सत्यालागीं साह्य । गुरु हा साधकांसी माय । गुरु हा कामधेनु गाय । भक्तांवरी दुभतसे ॥ ३ ॥ गुरु हा भक्तींचें मंडण । गुरु हा काळासी दंडण । गुरु हा करितसे खंडण । नानापरी पापाचें ॥ ४ ॥ गुरु हा वैराग्याचें मूळ । गुरु हा परब्रह्म केवळ । गुरु हा दाखवी तात्काळ । गांठीं लिंग देहाचें ॥ ५ ॥ गुरु हा घाली ज्ञानांजन । गुरु हा दाखवी निजधन । गुरु हा सौभाग्य देऊन । स्वात्मबोध नांदवी ॥ ६ ॥ काया काशी गुरु उपदेशी । तारकमंत्र दिला आम्हांसी । बाप विठ्ठल रखुमायेसी । विठ्ठल विनवी गुरुचरणीं ॥ ७ ॥

## ९. गुरुप्रदक्षिणा

धन्य धन्य हो प्रदक्षिणा सद्‌गुरुरायाची । धन्य धन्य हो प्रदक्षिणा श्रीगुरुरायाची । झाली त्वरा सुरवरां विमान उतरायाची ॥ ध्रु० ॥ पदोपदीं घडल्या अपार पुण्याच्या राशी । सकलहि तीर्थे घडलीं आम्हां आदिकरूनि काशी ॥ १ ॥ कोटी ब्रह्महत्या हरती करितां दंडवत । लोटांगण घालितां मोक्ष लोळे पायांत ॥ २ ॥ मृदंग टाळ घोळ भक्त भावार्थे गाती । नामसंकीर्तनीं नित्यानंदें नाचती ॥ ३ ॥ गुरुभजनाचा महिमा न कळे

आगमनिगमांसी । अनुभव ते जाणती जे गुरुपदिंचे अभिलाषी ॥ ४ ॥ प्रदक्षिणा करुनी देह भावें वाहिला । श्रीरंगात्मज विठ्ठल पुढें उभा राहिला ॥ ५ ॥

## १०. श्रीगुरुपादुकाष्टक

ज्या संगतीनेंच विराग झाला । मनोदरींचा जडभास गेला । साक्षात् परात्मा मज भेटवीला । विसरूं कसा मी गुरु पादुकांला ॥ १ ॥ सद्योगपंथें घरिं आणिवेलें । अंगेच मातें परब्रह्म केलें । प्रचंड तो बोधरवी उदेला । विसरूं कसा मी गुरुपादुकांला ॥२॥ चराचरीं व्यापकता जयाची । अखंड भेटी मजला तयाची । परं पदीं संभ्रम पूर्ण झाला । विसरूं कसा मी.... ॥ ३ ॥ जो सर्वदा गुप्त जनांत वागे । प्रसंग भक्तां निजबोध सांगे । सद्भक्तिभावांकरितां भुकेला । विसरूं कसा मी........ ॥ ४ ॥ अनंत माझे अपराध कोटी । नाणीं मनीं घालुनि सर्व पोटीं । प्रबोध करितां श्रम फार झाला । विसरूं कसा मी.......॥५॥ कांहीं मला सेवनहीं न झालें । तथापि तेणें मज उद्धरीलें । आतां तरी अर्पिन प्राण त्याला । विसरूं कसा मी........ ॥ ६ ॥ माझा अहंभाव वसे शरीरीं । तथापि तो सद्गुरु अंगिकारीं । नाहीं मनीं अल्प विकार ज्याला । विसरूं कसा मी....॥७॥ आतां कसा हा उपकार फेडूं । हा देह ओवाळुनि दूर सांडूं । म्यां एकभावें प्रणिपात केला । विसरूं कसा मी.... ॥८॥ जया वानितां वानितां वेदवाणी । म्हणे 'नेति नेतीति' लाजे दुरुनी । नव्हे अंत ना पार ज्याच्या रुपाला । विसरूं कसा मी ...... ॥९॥ जो साधुचा अंकित जीव झाला । त्याचा असे भार निरंजनाला । नारायणाचा श्रम दूर केला । विसरूं कसा मी गुरुपादुकांला ॥ १० ॥

## ११ इंदुकोटि स्तोत्रम्

इंदुकोटि तेजकीर्ण सिंधुभक्तवत्सलं । नंदनात्रिसूनुदत्त इंदिराक्ष श्रीगुरुं । गंध-माल्य अक्षतादि वृंददेववंदितं । वंदयामि नारसिंह सरस्वतीश पाहि माम् ॥ १ ॥ मायापाश अंधकार छायादूर भास्करं । आयताक्षि पाहि श्रियावल्लभेश नायकं । सेव्य भक्त वृंदवरद भूयोभूयो नमाम्यहं ॥ वंदयामि ॥ २ ॥ चित्तजादि वर्ग षट्कमत्तवारणांकुशं । तत्वासार शोभितात्म दत्तश्रीयवल्लभं । उत्तमावतारभूतकर्तृभक्तवत्सलं । वंदयामि० ॥ ३ ॥ व्योम आप वायुतेजभूमिकर्तृमीश्वरं । कामक्रोधमोहरहित सोमसूर्यलोचनं । कामितार्थदातृभक्त कामधेनु श्रीगुरुं ॥ वंदयामि० ॥४॥ पुंडरीक आयताक्ष कुंडलेंदुतेजसं । चंडदुरितखंडनार्थं श्रीगुरुं । दंडधारि मंडलीक मौलिमार्तण्डभासितानन्नं । वंदयामि० ॥ ५ ॥ वेदशास्त्रस्तुत्य

पादं आदिमूर्ति श्रीगुरुं । नादकलातीत कल्पपाद पादं सेव्ययं । सेव्यभक्तवृंदवरद भूयो भूयो नमाम्यहं । वंदयामि० ॥ ६ ॥ अष्टयोगतत्वनिष्ठ तुष्टज्ञान वारिधिं । कृष्णावेणी-तीरवासपंचनद्यसंगमं । कष्टदैन्य दूरभक्त तुष्टकामदायकं । वंदयामि ॥ ७ ॥ नारसिंह सरस्वतीश नाममष्ट मौक्तिकं । हारकृत्य शारदेन गंगाधराख्यात्मजं । धारणीक देवदीक्ष गुरुमूर्ति तोषितं । परमात्मानंदश्रिया पुत्रपौत्रदायकं । वंदयामि ॥८॥ नारसिंह सरस्वतीश अष्टकंच यः पठेत् । घोरसंसारसिंधुतारणाख्य साधनं । सारज्ञान दीर्घ आयुरारोग्यादि संपदा । चारुवर्ग काम्यलाभ वारंवार यज्जपेत् । वंदयामि० ॥ ९ ॥

## १२. सर्वसौख्यकरं स्तोत्रम्

यस्य नाम श्रुते सद्यो मृत्युर्दूरात्पलायते । दुःखवार्ता विलीयेत दत्तात्रेय नमोऽस्तुते ॥१॥ शोको नंदाय कल्पेत दैन्य दारिद्र्यहेतये । रोगःस्वंगाप्तये सम्यग् दिगंबर नमोऽस्तुते ॥ २ ॥ परयंत्रादिकं किञ्चित् प्रभवेन्नैव सूरिपु । कर्ता कृतेन बध्येत अवधूत नमोऽस्तु ते ॥ ३ ॥ कायिकं वाचिकं वाऽपि मानसं वा तथेव च । पापं तापं च दह्येत कालकाल नमोऽस्तुते ॥ ४ ॥ विषबाधा भवेन्नैव भूतादिविप्लवः कुतः । शत्रवो मित्रतामीयुर्यंधराज नमोऽस्तुते ॥ ५ ॥ दुर्बुद्धिः साधुतामेति शठः शाठ्यं जहात्परम् । पीत्वा यन्नामपीयूषं सिद्धराज नमोऽस्तुते ॥६॥ भयं दिक्षु प्रधावेत चिंता चुल्लिमियात् द्रुतम् । वैषम्यं विपिनं गच्छेद् योगिराज नमोऽस्तुते ॥ ७ ॥ दुःस्वप्नदुस्वदावाग्निं ग्रहाग्निघ्नं ह्यनुत्तमम् । संसारभेषजं सौम्यं मृत्युंजय नमामि तम् ॥ ८ ॥ रोगाभिसंकुले देहे निःसारे भेषजे सति । औषधं नामेदं वारि दत्तो धन्वंतरिः स्वयम् ॥९ ॥ भेषजं निष्कलं विद्धि दत्तमेकं विहाद यत् । जन्ममृत्युजराहंतृ दत्तानामामृतं महत् ॥१० ॥ य इदं पठति स्तोत्रं 'रंग' रोगार्तिनाशनम् । सर्वसौख्यकरं नृणां सायंकाले विशेषतः ॥११॥ त्रिसप्तं स्नापकाले वा वा मंदवारे सुसंयतः । तस्य रोगभयं नास्ति त्रिः सत्यं नात्र संशयः ॥ १२ ॥

इति श्रीदत्तपादारविंदमिलिंदब्रह्मचारि पांडुरंग (रंग अवधूत) महाराज-विरचितं सर्वसौख्यकरं स्तोत्रं संपूर्णम् ॥

## १३. अष्टक दत्तात्रयांचे

श्रीवक्रतुंड चतुरानन बालिका ही । श्रीलक्ष्मी भगवती महा कालिका ही ॥ गीता वसंततिलकामृततुल्यवृत्त । श्रीदत्त, दत्त जय श्रीगुरुदेवदत्त ॥ १ ॥ सिंहाद्रि पर्वत महाभुवनभकोटी । इंद्रादि देव वसती तेहतीस कोटी ॥ गंधर्व-यक्षगण किन्नर

ब्रह्मभूत । श्रीदत्त, दत्त, जय श्रीगुरुदेवदत्त ॥२॥ श्रीरेणुका, अनसुया, श्रुति वेदधात्री । गाधी, कपील मुनि, भार्गवराम, अत्री । ध्याती समग्र सरिता नवकोटी तीर्थ । श्रीदत्त दत्त, जय श्रीगुरुदेवदत्त ॥ ३ ॥ श्रीव्यास, वाल्मिक, शुकादिक नारदांही । वाटे तरीच भवसागर पारदा ही ॥ भूकोरि मूळपिठिकाही सर्वोपसंत । श्रीदत्त, जय श्रीगुरुदेवदत्त ॥ ४ ॥ कल्पद्रुमा हिणधुनी तरु डोलताती । पक्षी विवीध स्वर मंजुळ बोलताती । आखंड नाम पठणीं करिती अवृत्त । श्रीदत्त, दत्त, जय श्रीगुरुदेवदत्त ॥ ५ ॥ जंबूक, व्याघ्र, हरणें, फिरती समोर । चंडोल, कोकिल, करंडक, हंस, मोर ॥ त्या रम्य काननिं सदा रव कानिं येत । श्रीदत्त, दत्त, जय श्रीगुरुदेवदत्त ॥ ६ ॥ शाता दिगंबर अगोचर सूर्यचंद्रा । मातापुरीं करि तृणासनि योगनिद्रा ॥ दाता दयार्णव कदापि नव्हे अदत्त । श्रीदत्त, दत्त, जय श्रीगुरुदेवदत्त ॥ ७ ॥ जेव्हां वसंत ऋतु यामिनि शुक्लपक्षीं । नक्षत्रराजसुख लक्षि चकोर पक्षी ॥ तेव्हां कधी स्हाणिन त्या वसुनी वनांत । श्रीदत्त, दत्त, जय श्रीगुरुदेवदत्त ॥ ८ ॥ आनंदासिंधु शशिबंधु उदारखाणी । कौपीन, कुंडल, कमंडलु, दंडपाणी ॥ माळा जटामुकुटमंडित आवधूत । श्रीदत्त, दत्त, जय श्रीगुरुदेवदत्त ॥ ९ ॥ होतील प्राप्त म्हणती मुनि ब्रह्मचारी । धर्मार्थकाममोक्षादिक लाभ चारी ॥ उद्याग्तिांचि वदनीं संसारसक्त । श्रीदत्त, दत्त, जय श्रीगुरुदेवदत्त ॥ १० ॥ द्यावी सुभक्ति भजनीं म्हणे विष्णुदास । आशा धरून एवढी वमलों उदास ॥ केव्हां कृपा करूनि हा पुरवील हेत । श्रीदत्त, दत्त, जय श्रीगुरुदेवदत्त ॥ ११ ॥

## १४. अष्टक दत्ताचे (चामर)

यामिनीस शोभवीत, चंद्र तो प्रजापती । दुर्वास आवतार, तोचि श्रीरमापती ॥ श्रीरमापतीच अत्रि–आश्रमात राहिला । तो अनाथनाथ–दत्त, माहुरांत पाहिला ॥१॥ जो अखंड चंद्र श्रीमृगेंद्र नाम शीखरीं । जो पाहावयासि होति, वासना मसी खरी ॥ त्यां वियोग–ताप त्या, चकोरतुल्य साहिला । तो अनाथनाथ–दत्त, माहुरांत पाहिला ॥२॥ मायही यदा कदा, पिता कुमार मानवी । सद्गुरूस हांसतील, कीं उमा रमा रवी ॥ जो कुठेंचि नीगमास, दीसला न गाइला । तो अनाथनाथ–दत्त माहुरांत पाहिला ॥३॥ अर्जुना अधीक आपुल्याहिहून बाहु दे । याचका उचीत दान दे बहूत बाहुदे ॥ जो मुरासुरें धराधरें नरेंहि गाइला । तो अनाथनाथ–दत्त माहुरांत पाहिला ॥ ४ ॥ धर्म अर्थ काम मोक्ष, ग्राम गाणगापुर । श्रीगुरुचरित्रनाम, हेंचि गाणं गा पुरं ॥ नारसिंह श्रीसरस्वति स्वरूप जाहला । तो अनाथनाथ–दत्त, माहुरांत पाहिला ॥ ५ ॥ ज्या कधींहि कष्टती न, पातकांसि तासिता । वांच्छिती सदैव पाद,-मृत्तिका सिताऽसिता । जो समस्त योगज्ञानि, नन्मुनींनिं घ्याइला । तो अनाथनाथ–दत्त, माहुरांत पहिला ॥६॥

जो रवीशशीस समप्रकाश रंग वर्णवी । जो प्रबोध–ज्ञान–सिंधुचे तरंग वर्णवी ।
जो घटांत ही मठांत, भूपटांत लीहिला । तो अनाथनाथ–दत्त माहुरांत पाहिला ॥ ७ ॥
जो न लोटितांहि जाय, भक्त–लालसें दुर । जेंवि कां पटासि स्नेह, सक्त लाल सेंदुर ॥
कीं रुपज्ञ मानिताति आम्रवृक्ष कोकिला । तो अनाथनाथ–दत्त, माहुरांत पाहिला ॥८॥
जो अनंदकंद मंद–हास्य मूख साजरा । पंकजासनीं गमेचि, नीलपंखसा जरा ॥
जो सुगधंगंध देत, पाच जाइ जूइला । तो अनाथनाथ–दत्त, माहुरांत पाहिला ॥९॥
जो निगूणरूप पूर्ण, ब्रह्म आजरामर । ज्यासि सामरादि लोक, वारिताति चामर ।
जो अनूसुयेचिया निजूनि पायिं नाहिला । तो अनाथनाथ–दत्त, माहुरांत पाहिला ॥१०॥
हे सुधाकरासि देति, पुष्टि श्लोक आकरा । कोण या नको म्हणेल, पुण्यश्लोक 'आ'करा
विष्णुदास या कथामृतासि पिउनि धाइला । तो अनाथनाथ–दत्त, माहुरांत पाहिला ॥११॥

## १५. अष्टक दत्ताचे (शुद्धकामदा)

जय नमोस्तुते श्रीदिगंबरा । सद्गुरू निरूपाधि तूं वरा । उरुं न देसि दैवाचि पाकि ती । करुं विनंति दत्तात्रया किती ॥ १ ॥ सुकुळिं जन्म हा, लाभला मला । जरि तुझा न धा, लाभ लाभला ॥ तरि वृथा कृती, गेलि पंकिं ती । करुं विनंति दत्तात्रया किती ॥ २ ॥ तुज म्हणावया, लाज वाटती । मुळिंच चूकलों, मीच वाट ती ॥ परि तुझ्या सुरी, मान ही हतीं । करुं विनंति दत्तात्रया किती ॥ ३ ॥ विषय वीप हें सोमलादिक । खचित वाटतें तें मलाऽधिक ॥ परि नसे दुजी, मक्षितां गती । करुं विनंति दत्तात्रया किती ॥४॥ जरि प्रपंच चिंताग्नि पोळवी । तरिहि त्यामधें, मोह लोळवी । विविध ऊठती, कल्पना भिती । करुं विनंति दत्तात्रया किती ॥ ५ ॥ कनक द्रव्य लावण्य कामिनी । चटक लागली दिवस यामिनी ॥ विषय घ्यानिं लाचावली मती । करुं विनंति दत्तात्रया किती ॥ ६ ॥ षड्विकार कामादि वापुडे । गमति काजवे वा ! तुझ्यापुढे ॥ दिनमणी तुं ये, उदयाप्रती । करुं विनंती दत्तात्रया किती ॥७॥ अठवितों तुला, मी ज्यव्हां ज्यव्हां । पळसि दुरचि कां, तूं त्यव्हां त्यव्हां ॥ स्तवन कानचि का न ऐकती । करुं विनंति दत्तात्रया किती ॥८॥ निपट हा करावा विचारची । अनुसुया घडीलोपचारची ॥ मनिं अणून दात्याचि नोकें ती । करुं विनंती दत्तात्रया किती ॥९॥ करिसी भक्तिच्या कामदा सही । म्हणुनि प्रार्थितों, विष्णुदासही ॥ मज प्रसन्न हो, ऐकुनी स्तुती । करुं विनंति दत्तात्रया किती ॥ १० ॥

## १६ अष्टक श्रीदत्ताचे ( शा. वि. )

गेला बाळपणांत काळ क्रिडतां, तारुण्य आलें भरा । झालों मत्त मदांध कुंजर जसा

म्यालों न विश्वंभरा। रात्रंदीन परांगनेसि झटलों, तेसा पराच्या धना। स्वामी दत्त दयाघना, अवधुता श्रीअत्रिच्या नंदना ॥ १ ॥ नाहीं या ममर्यी विशेष उरली, चोलावया आवयी। कामक्रोध प्रकोप दोष उठती, व्याधी सहस्रावधी ॥ वार्धक्याचि दशा नको जगदिशा, सोसूं किती वेदना। स्वामी दत्त दयाघना अवधुता, श्रीअत्रिच्या नंदना ॥२॥ कोणी सन्निध या विपत्तित कदा, येती न वापा खरें। वृक्षीं पत्र–फुलें–फळें तंववरीं, लोलंगती पांखरें॥ तेंसे आप्त कलत्र मित्र अवघे, धिःकारिती निर्धना। स्वामी दत्त दयाघना अवधुता, श्रीअत्रिच्या नंदना ॥ ३ ॥ अद्यापी रिपुच्या सदास पतितोद्धरा न याया हर्ती। अद्यापी जगतार्थ मेघ स्रवती, धारा नद्या वाहती ॥ अद्यापी तरुही परार्थ फळती, सुगंध ये चंदना। स्वामी दत्त दयाघना अवधुता, श्रीअत्रिच्या नंदना ॥ ४ ॥ संध्यातर्पण वैश्वदेव गुरुची पूजा न औपासना। गावें नाम धरून नित्य हृदयीं, आहे परी वासना ॥ ती तूं माय कृपा करून पुरवी, कल्याण श्रीवर्धना। स्वामी दत्त दयाघना अवधुता, श्रीअत्रिच्या नंदना ॥ ५ ॥ दुग्धामाजिहि पावेना सुख कधीं, पाण्याविना मासुळी। जाणों तो तप साधनेंचि वसला, मांडव्यनामा सुळीं ॥ भक्तीवांचुनि दुःखदायक गमे, नानाकृती साधना। स्वामी दत्त दयाघना अवधुता, श्रीअत्रिच्या नंदना ॥ ६ ॥ संतापें तुम्हीही म्हणाल इतुका, कां वादतो आगळा। शत्रूचा क्षणमात्र नेम न कळे, कापील केव्हां गळा ॥ थोराची मरजी पटे न अरजी फिर्यादिची दाद ना। स्वामी दत्त दयाघना अवधुता, श्रीअत्रिच्या नंदना ॥७॥ दाता दत्त म्हणून लोक म्हणती, आम्ही म्हणूं ना तुला। आणूं साक्षिस वेद पत्रकसह, श्रीविष्णुच्या नातुला ॥ तुम्ही पावन सत्यची पतित हा, खोटा तरी बाध ना। स्वामी दत्त दयाघना, अवधुता श्रीअत्रिच्या नंदना ॥ ८ ॥ आनाथाप्रति साधुलोक अवघा, आहे पुराव्यास गा। तैसाची अठरा पुराणकरता, आहे पुरा व्यास गा। आतां सोडुं नका परंतु अपुल्या भी नाथ ! संवोधना। स्वामी दत्त दयाघना अवधुता, श्रीअत्रिच्या नंदना ॥ ९ ॥ माळा दंड करीं कमंडलु जटेचा मस्तकीं टोप तो। ब्रह्मांडांतरि जो फिरेचि लपतो, भक्तीस आटोपतो ॥ भक्तीची दृढ चित्तिं प्राप्ति करितां, युक्ती मला साधेना। स्वामी दत्त दयाघना अवधुता, श्रीअत्रिच्या नंदना ॥ १० ॥ यत्नें ना कळसी महा रणधिरा, श्रीलक्ष्मीनायका। बांधीती उखळीं परी सहजची, गोकुळिंच्या वायका ॥ ही शक्ती निजभक्ति लाउनि दिली, राखूनिया गोधना। स्वामी दत्त दयाघना अवधुता, श्रीअत्रिच्या नंदना ॥११॥ कांता कांचन राज्य वैभव नको, कैवल्यही राहुं द्या। होऊं द्या अपदा शरीर अथवा, काळासि हीराउं द्या। पाहूं द्या रुप येक वेळ नयनीं, ही माझि आराधना। स्वामी दत्त दयाघना अवधुता, श्रीअत्रिच्या नंदना ॥ १२ ॥ दावीं भक्तिच थोडिसी तरि नको, वैकुंठ कैलासही। मोठी दीधलि द्या विशेष गरुडा, तैसीच वैलासही ॥

